# किरातार्ज्जुनीयम् ।



महाकविभारविकृतम् ।



कलिकाताराजधान्याम् ।

श्रीयुतभुवनचन्द्रवसाकसंस्थापितसंवादज्ञानरत्नाकराख्य

यन्त्रे तद्द्वारैव

१९२५ संवत्सरे

मुद्रितम् ।

इ० १८६८ ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# किरातार्ज्जुनीयम् ।

प्रथमः सर्गः ।

श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥
कृतप्रणामस्य महीं महीभुजे जितां सपत्नेन निवेदयिष्यतः ।
न विव्यथे तस्य मनो नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ २ ॥
द्विषां विघाताय विधातुमिच्छतो रहस्यनुज्ञामधिगम्य भूभृतः ।
स सौष्ठवौदार्य्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥
क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥
स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते सकिम्प्रभुः ।
सदानुकूलेषु हि कुर्व्वते रतिं नृपेष्वमात्येषु च सर्व्वसम्पदः ॥ ५ ॥
निसर्गदुर्बोधमबोधविक्लवाः क्व भूपतीनाञ्चरितं क्व जन्तवः ।
तवानुभावोऽयमवेदि यन्मया निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥
विशङ्कमानो भवतः पराभवं नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते नयेन जेतुञ्जगतीं सुयोधनः ॥ ७ ॥
तथापि जिह्मः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्य्यसङ्गमाद्वरं विरोधोऽपि समं महात्मभिः ॥ ८ ॥
कृतारिषड्वर्गजयेन मानवीमगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥
सखीनिव प्रीतियुजोऽनुजीविनः समानमानान् सुहृदश्च बन्धुभिः ।
स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम् ॥ १० ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान्न बाधतेऽस्य त्रिगणः परस्परम् ॥ ११ ॥
निरत्ययं साम न दानवर्जितं न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्त्तते तस्य विशेषशालिनी गुणानुरोधेन विना न सत्क्रिया ॥ १२ ॥
वसूनि वाञ्छन्न वशी न मन्युना स्वधर्म्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा निहन्ति दण्डेन स धर्म्मविप्लवम् ॥ १३ ॥
विधाय रक्षान् परितः परेतरानशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति सम्पदः ॥ १४ ॥
अनारतन्तेन पदेषु लम्भिता विभज्य सम्यग्विनियोगसत्क्रियाः ।
फलन्त्युपायाः परिबृंहितायतीरुपेत्य सङ्घर्षमिवार्थसम्पदः ॥ १५ ॥
अनेकराजन्यरथाश्वसङ्कुलं तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः ॥ १६ ॥
सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः ।
वितन्वति क्षेममदेवमातृकाश्चिराय तस्मिन् कुरवश्चकासति ॥ १७ ॥
उदारकीर्त्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयम्प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥ १८ ॥
महौजसो मानधना धनार्च्चिता धनुर्भृतः संयति लब्धकीर्त्तयः ।
न संहतास्तस्य न भिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ १९ ॥
महीभृतां सच्चरितैश्चरैः क्रियाः स वेद निःशेषमशेषितक्रियः ।
महोदयैस्तस्य हितानुबन्धिभिः प्रतीयते धातुरिवेहितं फलैः ॥ २० ॥
न तेन सज्यं क्वचिदुद्यतन्धनुः कृतन्न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते नराधिपैर्म्माल्यमिवास्य शासनम् ॥ २१ ॥
स यौवराज्ये नवयौवनोद्धतं निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा धिनोति हव्येन हिरण्यरेतसम् ॥ २२ ॥
प्रलीनभूपालमपि स्थिरायति प्रशासदावारिधि मण्डलम्भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो दुरन्ता बलवद्विरोधिता ॥ २३ ॥
कथाप्रसङ्गेन जनैरुदाहृतादनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद्व्यथते नताननः स दुःसहान्मन्त्रपदादिवोरगः । २४ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

तदाशु कर्त्तुं त्वयि जिह्ममुद्यते विधीयतान्तत्र विधेयमुत्तरम् ।
परप्रणीतानि वचांसि चिन्वतां प्रवृत्तिसाराः खलु मादृशाङ्गिरः ॥ २५ ॥

इतीरयित्वा गिरमात्तसत्क्रिये गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनम्महीभुजा तदाचचक्षेऽनुजसन्निधौ वचः ॥ २६ ॥

निशम्य सिद्धिं द्विषतामपाकृतीस्ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीरुदाजहार द्रुपदात्मजा गिरः ॥ २७ ॥

भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां निरस्तनारीसमया दुराधयः ॥ २८ ॥

अखण्डमाखण्डलतुल्यधामभिश्चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता मतङ्गजेन स्रगिवापवर्जिता ॥ २९ ॥

व्रजन्ति ते मूढधियः पराभवम्भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥ ३० ॥

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥

भवन्तमेतर्हि मनस्विगर्हिते विवर्त्तमानं नरदेव वर्त्मनि ।
कथन्न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ ३२ ॥

अवन्ध्यकोपस्य विहन्तुरापदाम्भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥ ३३ ॥

परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरिरेणुरूषितः ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥ ३४ ॥

विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः ।
स वल्कवासांसि तवाधुना हरन् करोति मन्युन्न कथन्धनञ्जयः ॥ ३५ ॥

वनान्तशय्याकठिनीकृताकृती कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ विलोकयन्नुत्सहसे न बाधितुम् ॥ ३६ ॥

इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः ।
विचिन्तयन्त्या भवदापदं परां रुजन्ति चेतः प्रसभम्ममाधयः ॥ ३७ ॥

पुराधिरूढः शयनम्महाधनं विबोध्यसे यः स्तुतिगीतिमङ्गलैः ।
अदभ्रदर्भामधिशय्य स स्थलीं जहासि निद्रामशिवैः शिवारुतैः ॥ ३८ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

पुरोपनीतं नृप रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥ ३९ ॥
अनारतं यौ मणिपीठशायिनावरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते मृगद्विजालूनशिखेषु बर्हिषाम् ॥ ४० ॥
द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः ।
परैरपर्य्यासितवीर्य्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१ ॥
विहाय शान्तिं नृपधाम तत्पुनः प्रसीद सन्धेहि बधाय विद्विषाम् ।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः ॥ ४२ ॥
पुरःसरा धामवतां यशोधनाः सुदुःसहं प्राप्य निकारमीदृशम् ।
भवादृशाश्चेदधिकुर्व्वते रतिं निराश्रया हन्त हता मनस्विता ॥ ४३ ॥
अथ क्षमामेव निरस्तविक्रमश्चिराय पर्य्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्मकार्म्मुकं जटाधरः सन् जुहुधीह पावकम् ॥ ४४ ॥
न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ॥ ४५ ॥
विधिसमयनियोगाद्दीप्तिसंहारजिह्मं शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमान्दिनादौ दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥ ४६ ॥

इति श्रीभारविकृतौ किरातार्ज्जुनीये महाकाव्ये प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः ।

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरङ्गरीयसीम् ।
उपपत्तिमदूर्ज्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ १ ॥
यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥ २ ॥
विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥
परिणामसुखे गरीयसी व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्य्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥ ४ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

इयमिष्टगुणाय रोचतां रुचिरार्था भवतेऽपि भारती।
ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः॥ ५॥
चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता।
कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति॥ ६॥
विधुरं किमतः परं परैरवगीतां गमिते दशामिमाम्।
अवसीदति यत्सुरैरपि त्वयि सम्भावितवृत्ति पौरुषम्॥ ७॥
द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः॥ ८॥
अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा॥ ९॥
अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया।
अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः॥ १०॥
क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्॥ ११॥
प्रभवः खलु कोषदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते॥ १२॥
अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः।
विनिपातनिवर्त्तनक्षमं तदमालम्बनमात्मपौरुषम्॥ १३॥
विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः॥ १४॥
तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायवन्ध्यताम्।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः॥ १५॥
अथ चेदवधिः प्रतीक्ष्यते कथमाविष्कृतजिह्मवृत्तिना।
धृतराष्ट्रसुतेन सुत्यजाश्चिरमास्वाद्य नरेन्द्रसम्पदः॥ १६॥
द्विषता विहितं त्वयाथवा यदि लब्धा पुनरात्मनः पदम्।
जननाथ तवानुजन्मनां कृतमाविष्कृतपौरुषैर्भुजैः॥ १७॥
मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्त्तयते स्वयं हतैः।
लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः॥ १८॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९ ॥
ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ २० ॥
किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ २१ ॥
कुरु तन्मतिमेव विक्रमे नृप निर्धूय तमः प्रमादजम् ।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥ २२ ॥
द्विरदानिव दिग्विभावितांश्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान् द्विषतां कः शतमन्युतेजसः ॥ २३ ॥
ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बु सन्ततिः ॥ २४ ॥
इति दर्शितविक्रियं सुतं मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिर्द्विरदं दुष्टमिवोपचक्रमे ॥ २५ ॥
अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥ २६ ॥
स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥ २७ ॥
उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ॥ २८ ॥
अविदृप्ततया तथापि मे हृदयं निर्णयमेव धावति ।
अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः ॥ २९ ॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ ३० ॥
अभिवर्षति योऽनुपालयन् विधिवीजानि विवेकवारिणा ।
स सदा फलशालिनीं क्रियां शरदं लोक इवाधितिष्ठति ॥ ३१ ॥
शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ३२ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्॥ ३३॥
स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः॥ ३४॥
शिवमौपयिकं गरीयसीं फलनिष्पत्तिमदूषितायतीम्।
विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः॥ ३५॥
अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते॥ ३६॥
बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः।
क्षयपक्ष इवैन्दवीः कलाः सकलाहन्ति स शक्तिसम्पदः॥ ३७॥
समवृत्तिरुपैति मार्द्दवं समये यश्च तनोति तिग्मताम्।
अधितिष्ठति लोकमोजसा स विवस्वानिव मेदिनीपतिः॥ ३८॥
क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छलाः श्रियः॥ ३९॥
किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः।
क्रियते पतिरुच्चकैरपां भवता धीरतयाऽधरीकृतः॥ ४०॥
श्रुतमप्यधिगम्य ये रिपून् विनयन्ते न शरीरजन्मनः।
जनयन्त्यचिराय सम्पदामयशस्ते खलु चापलाश्रयम्॥ ४१॥
अतिपातितकालसाधना स्वशरीरेन्द्रियवर्गतापनी।
जनवन्न भवन्तमक्षमा नयसिद्धेरपनेतुमर्हति॥ ४२॥
उपकारकमायतेर्भृशं प्रसवः कर्म्मफलस्य भूरिणः।
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम्॥ ४३॥
प्रणतिप्रवणान् विहाय नः सहजस्नेहनिबद्धचेतसः।
प्रणमन्ति सदा सुयोधनं प्रथमे मानभृतां न वृष्णयः॥ ४४॥
सुहृदः सहजास्तथेतरे मतमेषां न विलङ्घयन्ति ये।
विनयादिवयापयन्ति ते धृतराष्ट्रात्मजमात्मसिद्धये॥ ४५॥
अभियोग इमान् महीभुजो भवता तस्य ततः कृतावधेः।
प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव॥ ४६॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

उपजापसहान् विलङ्घयन् स विधाता नृपतीन् मदोद्धतः ।
सहते न जनोऽप्यधःक्रियां किमु लोकाधिकधाम राजकम् ॥ ४७ ॥

असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ ४८ ॥

मदमानसमुद्धतं नृपं न वियुङ्क्ते नियमेन मूढता ।
अतिमूढ उदस्यते नयान्नयहीनादपरज्यते जनः ॥ ४९ ॥

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
सुकरस्तरुवत् सहिष्णुना रिपुरुन्मूलयितुम्महानपि । ५० ॥

अणुरप्युपहन्ति विग्रहः प्रभुमन्तःप्रकृतिप्रकोपजः ।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तनिघर्षजोऽनलः ॥ ५१ ॥

मतिमान् विनयप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे विपदन्ताह्यविनीतसम्पदः ॥ ५२ ॥

लघुवृत्तितया भिदां गतं बहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः शिथिलं कूलमिवापगारयः ॥ ५३ ॥

अनुशासतमित्यनाकुलं नयवर्त्माकुल मर्ज्जुनाग्रजम् ।
स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ ५४ ॥

मधुरैरवशानि लम्भयन्नपि तिर्य्यञ्चि शमं निरीक्षितैः ।
परितः पटु बिभ्रदेनसां दहनं धाम विलोकनक्षमम् ॥ ५५ ॥

सहसोपगतः सविस्मयं तपसां सूतिरसूतिरापदाम् ।
ददृशे जगतीभुजा मुनिः स वपुष्मानिव पुण्यसञ्चयः ॥ ५६ ॥

अथोच्चकैरासनतः परार्ध्यादुद्यन् स धूतारुणवल्कलाग्रः ।
रराज कीर्णाकपिशांशुजालः शृङ्गात्सुमेरोरिव तिग्मरश्मिः ॥ ५७ ॥

अवहितहृदयो विधाय सोऽर्हामृषिवदृषिप्रवरे गुरूपदिष्टाम् ।
तदनुमतमलञ्चकार पश्चात् प्रशम इव श्रुतमासनं नरेन्द्रः ॥ ५८ ॥

व्यक्तोदितस्मितमयूखविभासितोष्ठस्तिष्ठन्मुनेरभिमुखं स विकीर्णधाम्नः ।
तन्वन्तमिद्धमभितो गुरुमंशुजालं लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्त्तेः ॥ ५९ ॥

इति श्रीभारविकृतौ किरातार्ज्जुनीये महाकाव्ये द्वितीयः सर्गः ॥ २ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# तृतीयः सर्गः।

ततः शरच्चन्द्रकराभिरामैरुत्सर्पिभिः प्रांशुमिवांशुजालैः।
बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम्॥ १॥
प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।
प्रसह्य चेतस्सु समासजन्तमसंस्तुतानामपि भावमार्द्रम्॥ २॥
अनुद्धताकारतया विविक्तां तन्वन्तमन्तःकरणस्य वृत्तिम्।
माधुर्यविस्रम्भविशेषभाजा कृतोपसम्भाषमिवेक्षितेन॥ ३॥
धर्मात्मजो धर्मनिबन्धिनीनां प्रसूतिमेनः प्रणुदां श्रुतीनाम्।
हेतुं तदभ्यागमने परीप्सुः सुखोपविष्टं मुनिमाबभाषे॥४॥ चतुर्भिःकलापकम्॥
अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः॥ ५॥
अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः।
आसंसृतेरस्मि जगत्सु जातस्त्वय्यागते यद्बहुमानपात्रम्॥ ६॥
श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्त्तिम्।
सन्दर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किन्न धत्ते॥ ७॥
श्योतन्मयूखेऽपि हिमद्युतौ मे न निर्वृतं निर्वृतिमेति चक्षुः।
समुज्झितज्ञातिवियोगखेदं त्वत्सन्निधावुच्छ्वसतीव चेतः॥ ८॥
निरास्पदं प्रश्नकुतूहलित्वमस्मास्वधीनं किमु निःस्पृहाणाम्।
तथापि कल्याणकरीं गिरं ते मां श्रोतुमिच्छा मुखरीकरोति॥ ९॥
इत्युक्तवानुक्तिविशेषरम्यं मनःसमाधाय जयोपपत्तौ।
उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः॥ १०॥
चिचीषतां जन्मवतामलध्वीं यशोवतंसामुभयत्र भूतिम्।
अभ्यर्हिता बन्धुषु तुल्यरूपा वृत्तिर्विशेषेण तपोधनानाम्॥ ११॥
तथापि निघ्नं नृप तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः।
वीतस्पृहानामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः॥ १२॥ युग्मम्॥
सुता न यूयं किमु तस्य राज्ञः सुयोधनं वा न गुणैरतीताः॥
यस्त्यक्तवान् वः स वृथा बलाद्वा मोहं विधत्ते विषयाभिलाषः॥ १३॥


CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि॥ १४॥
पथश्च्युतायां समितौ रिपूणां धर्म्यां दधानेन धुरं चिराय।
त्वया विपत्स्वप्यविपत्तिरम्यमाविष्कृतं प्रेम परं गुणेषु॥ १५॥
विधाय विध्वंसनमात्मनीनं शमैकवृत्तेर्भवतश्छलेन।
प्रकाशितत्वन्मतिशीलसाराः कृतोपकारा इव विद्विषस्ते॥ १६॥
लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्य्यास्त्रबलैर्विपक्षः।
अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः॥ १७॥
त्रिः सप्तकृत्वो जगतीपतीनां हन्ता गुरुर्यस्य स जामदग्न्यः।
वीर्य्यावधुतः स्म तदा विवेद प्रकर्षमाधारवशं गुणानाम्॥ १८॥
यस्मिन्ननैश्वर्य्यकृतव्यलीकः पराभवं प्राप्त इवान्तकोऽपि।
धुन्वन् धनुः कस्य रणे न कुर्य्यान्मनो भयैकप्रवणं स भीष्मः॥ १९॥
सृजन्तमाजाविषुसंहतीर्वः सहेत कोपज्वलितं गुरुं कः।
परिस्फुरल्लोलशिखाग्रजिह्वं जगज्जिघत्सन्तमिवान्तवह्निम्॥ २०॥
निरीक्ष्य संरम्भनिरस्तधैर्य्यं राधेयमाराधितजामदग्न्यम्।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः॥ २१॥
यया समासादितसाधनेन सुदुश्चरामाचरता तपस्याम्।
एते दुरापं समवाप्य वीर्य्यमुन्मूलितारः कपिकेतनेन॥ २२॥
महत्त्वयोगाय महामहिम्नामाराधनीं तां नृप देवतानाम्।
दातुं प्रदानोचितभूरिधाम्नीमुपागतः सिद्धिमिवास्मि विद्याम्॥ २३॥ युग्मम्
इत्युक्तवन्तं व्रज साधयेति प्रमाणयन् वाक्यमजातशत्रोः।
प्रसेदिवांसं तमुपाससाद वसन्निवान्ते विनयेन जिष्णुः॥ २४॥
निर्य्याय विद्याथ दिनादिरम्याद्बिम्बादिवार्कस्य मुखान्महर्षेः।
पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे॥ २५॥
योगञ्च तं योग्यतमाय तस्मै तपःप्रभावाद्विततार सद्यः।
येनास्य तत्त्वेषु कृतेऽवभासे समुन्मिमीलेव चिराय चक्षुः॥ २६॥
आकारमाशंसितभूरिलाभं दधानमन्तःकरणानुरूपम्।
नियोजयिष्यन् विजयोदये तं तपःसमाधौ मुनिरित्युवाच॥ २७॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अनेन योगेन विवृद्धतेजा निजां परस्मै पदवीमयच्छन् ।
समाचराचारमुपात्तशस्त्रो जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥
करिष्यसे यत्र सुदुश्चराणि प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयन्तमेषक्षणान्नेष्यति गुह्यकस्त्वाम् ॥ २९ ॥
इति ब्रुवाणेन महेन्द्रसूनुं महर्षिणा तेन तिरोबभूवे ।
तं राजराजानुचरोऽस्य साक्षात् प्रदेशमादेशमिवाधितस्थौ ॥ ३० ॥
कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनः स जिष्णौ ।
इयाय सख्याविव सम्प्रसादं विश्वासयत्याशु सतां हि योगः ॥ ३१ ॥
अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन ।
बृहद्द्युतीन् दुःखकृतात्मलाभं तमः शनैः पाण्डुसुतान् प्रपेदे ॥ ३२ ॥
असंशयालोचितकार्य्यनुन्नः प्रेम्णा समानीय विभज्यमानः ।
तुल्याद्विभागादिव तन्मनोभिर्दुःखातिभारोऽपि लघुः स मेने ॥ ३३ ॥
धैर्य्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्य्यञ्च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः ॥ ३४ ॥
तान् भूरिधाम्नश्चतुरोऽपि दूरं विहाय यामानिव वासरस्य ।
एकौघभूतं तदशर्म्म कृष्णां विभावरीं ध्वान्तमिव प्रपेदे ॥ ३५ ॥
तुषारलेखाकुलितोत्पलाभे पर्य्यश्रुणी मङ्गलभङ्गभीरुः ।
अगूढभावाऽपि विलोकने सा न लोचने मीलयितुं विषेहे ॥ ३६ ॥
अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टम् ।
मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥
धैर्य्यावसादेन हृतप्रसादा वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धबाष्पोदयसन्नकण्ठमुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥
मग्नां द्विषच्छद्मनि पङ्कभूते सम्भावनां भूतिमिवोद्धरिष्यन् ।
आधिद्विषामातपसांप्रसिद्धेरस्मद्विना मा भृशमुन्मनीभूः ॥ ३९ ॥
यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥
लोकं विधात्रा विहितस्य गोप्तुं क्षत्रस्य मुष्णन् वसु जैत्रमोजः ।
तेजस्वितायां विजयैकवृत्तेर्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥ ४१ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

व्रीड़ानतैराप्तजनोपनीतः संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।
वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णम् ॥ ४२ ॥
वीर्य्यावदानेषु कृतावमर्षस्तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्व्वन् प्रयामक्षयमायतीनामर्कत्विषामह्न इवावशेषः ॥ ४३ ॥
प्रसह्य योऽस्मासु परैः प्रयुक्तः स्मर्त्तुं न शक्यः किमुताधिकर्त्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः स त्वद्विना मे हृदयं निकारः ॥४४॥ कलापकम् ।
प्राप्तोऽभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद्विकारम् ।
द्विषत्प्रतापान्तरितोरुतेजाः शरद्घनाकीर्ण इवादिरह्नः ॥ ४५ ॥
सव्रीड़मन्दैरिव निष्क्रियत्वान्नात्यर्थमस्त्रैरवभासमानः ।
यशःक्षयक्षीणजलार्णवाभस्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥
दुःशासनामर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्य्यसारः कच्चित् स एवासि धनञ्जयस्त्वम् ॥ ४७ ॥ विशेषकम् ।
स क्षत्रियस्त्राणसहः सतां यस्तत् कार्म्मुकं कर्म्मसु यस्य शक्तिः ।
वहन् द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहताभि

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## त्रयोदशः सर्गः ।



वपुषा परमेण भूधराणामथ सम्भाव्यपराक्रमं विभेदे ।
मृगमाशु विलोकयाञ्चकार स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥ १ ॥
स्फुटबद्धसटोन्नतिः स दूरादभिधावन्नवधीरितान्यकृत्यः ।
जयमिच्छति तस्य जातशङ्के मनसीमं मुहुराददे वितर्कम् ॥ २ ॥
घनपोत्रविदीर्णशालमूलो निविडस्कन्धनिकाषरुग्णवप्रः ।
अयमेकचरोऽभिवर्त्तते मां समरायेव समाजुहूषमाणः ॥ ३ ॥
इह वीतभया तपोऽनुभावाज्जहति व्यालमृगाः परेषु वृत्तिम् ।
मयि तां सुतरामसौ विधत्ते विकृतिः किन्नु भवेदियन्नु माया ॥ ४ ॥
अथवैष कृतज्ञयेव पूर्व्वम्भृशमासेवितया रुषा न मुक्तः ।
अवधूय विरोधिनीः किमारान्मृगजातीरभियाति माञ्जवेन ॥ ५ ॥
न मृगः खलु कोऽप्ययञ्जिघांसुः स्खलति ह्यत्र तथा भृशम्मनो मे ।
विमलङ्कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा ॥ ६ ॥
मुनिरस्मि निरागसः कुतो मे भयमित्येष न भूतयेऽभिमानः ।
परवृद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥ ७ ॥
दनुजः स्विदयं क्षपाचरो वा वनजे नेति बलं बतास्ति सत्त्वे ।
अभिभूय तथा हि मेघनीलः सकलङ्कम्पयतीव शैलराजम् ॥ ८ ॥
अयमेव मृगव्यसत्रकामः प्रहरिष्यन्मयि मायया शमस्थे ।
पृथुभिर्ध्वजिनीरवैरकार्षीच्चकितोद्भ्रान्तमृगाणि काननानि ॥ ९ ॥
बहुशः कृतसत्कृतेर्विधातुम्प्रियमिच्छन्नथ वा सुयोधनस्य ।
क्षुभितं वनगोचराभियोगाद्गणमाशिश्रियदाकुलन्तिरश्चाम् ॥ १० ॥
अवलीढसनाभिरश्वसेनः प्रसभं खाण्डवजातवेदसा वा ।
प्रतिकर्त्तुमुपागतः समन्युः कृतवैरो यदि वा वृकोदरेण ॥ ११ ॥
बलशालितया यथा तथा वा धियमुच्छेदपरामयन्दधानः ।
नियमेन मया निवर्हणीयः परमं लाभमरातिभङ्गमाहुः ॥ १२ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

कुरु तात तपांस्यमार्ग्गदायी विजयायेत्यलमन्वशान्मुनिस्त्वाम्।
बलिनश्च वधादृतेऽस्य शक्यं व्रतसंरक्षणमन्यथा न कर्त्तुम्॥ १३॥
इति तेन विचिन्त्य चापनाम प्रथमम्पौरुषचिह्नमाललम्बे।
उपलब्धगुणः परस्य भेदे सचिवः शुद्ध इवाददे च बाणः॥ १४॥
अनुभाववता गुरु स्थिरत्वादविसंवादि धनुर्धनञ्जयेन।
स्वबलव्यसनेऽपि पीड्यमानं गुणवन्मित्रमिवानतिम्प्रपेदे॥ १५॥
प्रविकर्षनिनादभिन्नरन्ध्रः पदविष्टम्भनिपीडितस्तदानीं।
अधिरोहति गाण्डिवं महेषौ सकलः संशयमारुरोह शैलः॥ १६॥
ददृशेऽथ स विस्मयं शिवेन स्थिरपूर्णायतचापमण्डलस्थः।
रचितस्त्रिसुराणां पुरां विधातुं वधमात्मेव भयङ्करः परेषाम्॥ १७॥
विचकर्ष च संहितेषुरुच्चैश्चरणास्कन्दननामिताचलेन्द्रः।
धनुरायतभोगवासुकिज्या वदनग्रन्थिविमुक्तवह्नि शम्भुः॥ १८॥
स भवस्य भवक्षयैकहेतोः सितसप्तेश्च विधास्यतोः सहार्थम्।
रिपुराप पराभवाय मध्यं प्रकृतिप्रत्यययोरिवानुबन्धः॥ १९॥
अथ दीपितवारिवाहवर्त्मारवविच्रासितवारणादवार्य्यः।
निपपात जवादिषुः पिनाकान्महतोऽभ्रादिव वैद्युतः कृशानुः॥ २०॥
व्रजतोऽस्य बृहत्पतत्रजन्मा कृततार्क्ष्योपनिपातवेगशङ्कः।
प्रतिनादमहान्महोरगाणां हृदयश्रोत्रभिदुत्पपात नादः॥ २१॥
नयनादिव शूलिनः प्रवृत्तैर्मनसोऽप्याशुतरं यतः पिशङ्गैः।
विदधे विलसत्तडिल्लताभैः किरणैर्व्योमनि मार्गणस्य मार्गः॥ २२॥
अपयन्धनुषः शिवान्तिकस्थैर्विवरेसद्भिरभिख्यया जिहानः।
युगपद्ददृशे विशन्वराहन्तदुपोढैश्च नभश्चरैः पृषत्कः॥ २३॥
स तमालनिभे रिपौ सुराणां घननीहार इवाविषक्तवेगः।
भयविप्लुतमीक्षितो नभस्स्थैर्जगतीं ग्राह इवापगां जगाहे॥ २४॥
सपदि प्रियरूपपर्वरेखः सितलोहाग्रनखः खमाससाद।
कुपितान्तकतर्ज्जनाङ्गुलिश्रीर्व्यथयन्प्राणभृतः कपिध्वजेषुः॥ २५॥
परमास्त्रपरिग्रहोरु तेजः स्फुरदुल्काकृति विक्षिपन्वनेषु।
स जवेन पतन्परःशतानाम्पततां व्रात इवारवं वितेने॥ २६॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अविभावितनिष्क्रमप्रयाणः शमितायाम इवातिरंहसा सः ।
सह पूर्वतरं नु चित्तवृत्तेरपतित्वा नु चकार लक्ष्यभेदम् ॥ २७ ॥
स वृषध्वजसायकावभिन्नञ्जयहेतुः प्रतिकायमेषणीयम् ।
लघु साधयितुं शरः प्रसेहे विधिनेवार्थमुदीरितम्प्रयत्नः ॥ २८ ॥
अविवेकवृथाश्रमाविवार्थं क्षयलोभाविव संश्रितानुरागम् ।
विजिगीषुमिवानयप्रमादाववसादं विशिखौ विनिन्यतुस्तं ॥ २९ ॥
अथ दीर्घतरन्तमः प्रवेक्ष्यन्सहसा रुग्णरयः स संभ्रमेण ।
निपतन्तमिवोष्णरश्मिमुर्व्वीं वलयीभूततरुन्धराञ्च मेने ॥ ३० ॥
स गतः क्षितिमुष्णशोणितार्द्रः खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्न्निरासे ॥ ३१ ॥
स्फुटपौरुषमापपात पार्थं स्तमथ प्राज्यशरः शरञ्जिघृक्षुः ।
न तथा कृतवेदिनां करिष्यन् प्रियतामेति यथा कृतावदानः ॥ ३२ ॥
उपकार इवासति प्रयुक्तः स्थितिमप्राप्य मृगे गतः प्रणाशम् ।
कृतशक्तिरधोमुखो गुरुत्वा ज्जनितव्रीड इवात्मपौरुषेण ॥ ३३ ॥
स समुद्धरता विचिन्त्य तेन स्वरुचङ्कीर्त्तिमिवोत्तमान्दधानः ।
अनुयुक्त इव स्ववार्त्तमुच्चैः परिरेभे नु भृशं विलोचनाभ्याम् ॥ ३४ ॥
तत्र कार्म्मुकभृतम्महाभुजः पश्यति स्म सहसा वनेचरम् ।
सन्निकाशयितुमग्रतः स्थितं शासनं कुसुमचापविद्विषः ॥ ३५ ॥
स प्रयुज्य तनये महीपतेरात्मजातिसदृशीं किलानतिम् ।
सान्त्वपूर्व्वमभिनीतिहेतुकं वक्तुमित्यमुपचक्रमे वचः ॥ ३६ ॥
शान्तता विनययोगि मानसं भूरिधाम विमलं तपः श्रुतम् ।
प्राह ते नु सदृशी दिवौकसामन्ववायमवदातमाकृतिः ॥ ३७ ॥
दीपितस्त्वमनुभावसम्पदा गौरवेण लघयन्महीभृतः ।
राजसे मुनिरपीह कारयन्नाधिपत्यमिव शातमन्यवम् ॥ ३८ ॥
तापसोऽपि विभुतामुपेयिवा नास्पदन्त्वमसि सर्व्वसम्पदाम् ।
दृश्यते हि भवतोविना जनैरन्वितस्य सचिवैरिव द्युतिः ॥ ३९ ॥
विस्मयः क इव वा जयश्रिया नैव मुक्तिरपि ते दवीयसी ।
ईप्सितस्य न भवेदुपाश्रयः कस्य निर्जितरजस्तमोगुणः ॥ ४० ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

२४३५
संस्कृत ५५ निका
२०

द्वेपयन्नहिमतेजसं त्विषा स त्वमित्यमुपपन्नपौरुषः ।
हर्त्तुमर्हसि वराहभेदिनन्नैनमस्मदधिपस्य सायकम् ॥ ४१ ॥
स्मर्य्यते तनुभृतां सनातनं न्याय्यमाचरणमुत्तमैर्नृभिः ।
ध्वंसते यदि भवादृशस्ततः कः प्रयातु वद तेन वर्त्मना ॥ ४२ ॥
आकुमारमुपदेष्टुमिच्छव सन्निवृत्तिमपथान्महापदः ।
योगशक्तिजितजन्ममृत्यवः शीलयन्ति मुनयः सुशीलताम् ॥ ४३ ॥
तिष्ठतान्तपसि पुण्यमासृजन्सम्पदोऽनुगुणयन्सुखैषिणां ।
योगिनाम्परिणमन्विमुक्तये केन नास्तु विनयः सताम्प्रियः ॥ ४४ ॥
नूनमत्रभवतः शराकृतिं सर्व्वथायमनुयाति सायकः ।
सोऽयमित्यनुपपन्नसंशयः कारितस्त्वमपथे पदं यया ॥ ४५ ॥
अन्यदीयविशिखे न केवलं निःस्पृहस्य भवितव्यमाहृते ।
निघ्नतः परनिवर्हितं मृगं व्रीडितव्यमपि ते सचेतसः ॥ ४६ ॥
सन्ततन्निशमयन्तउत्सुका यैः प्रयान्ति मुदमस्य सूरयः ।
कीर्त्तितानि हसितेऽपि तानि यं व्रीडयन्ति चरितानि मानिनम् ॥ ४७ ॥
अन्यदोषमिव स स्वकं गुणं ख्यापयेत्कथमधृष्टताजड़ः ।
उच्यते स खलु कार्य्यवत्तया धिग्विभिन्नबुधसेतुमर्थिताम् ॥ ४८ ॥ युग्मम् ॥
दुर्व्वचन्तदथ मा स्म भून्मृगस्त्वय्यसौ यदकरिष्यदोजसा ।
नैनमाशु यदि वाहिनीपतिः प्रत्यपत्स्यत सितेन पत्रिणा ॥ ४९ ॥
कोन्विमं हरितुरङ्गमायुधस्थेयसीन्दधतमङ्गसंहतिम् ।
वेगवत्तरमृते चमूपतेर्हन्तुमर्हति शरेण दंष्ट्रिणम् ॥ ५० ॥
मित्रमिष्टमुपकारि संशये मेदिनीपतिरयन्तथा च ते ।
तं विरोध्य भवता निरासि मा सज्जनैकवसतिः कृतज्ञता ॥ ५१ ॥
लभ्यमेकसुकृतेन दुर्ल्लभा रक्षितारमसुरक्ष्यभूतयः ।
स्वन्तमन्तविरसाजिगीषताम्मित्रलाभमनु लाभसम्पदः ॥ ५२ ।
चञ्चलं वसु नितान्तमुन्नता मेदिनीमपि हरन्त्यरातयः ।
भूधरस्थिरमुपेयमागतं मावमंस्त सुहृदम्महीपतिम् ॥ ५३ ॥
जेतुमेव भवता तपस्यते नायुधानि दधते मुमुक्षवः ।
प्राप्स्यते च सकलं महीभृता सङ्गतेन तपसः फलन्त्वया ॥ ५४ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वाजिभूमिरिभराजकाननं सन्ति रत्ननिचयाश्च भूरिशः ।
काञ्चनेन किमिवास्य पत्रिणा केवलन्न सहते विलङ्घनम् ॥ ५५ ॥
सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु न महान्समीहते जीवितङ्किमु धनन्धनायितुम् ॥ ५६ ॥
तत्तदीयविशिखातिसर्ज्जनादस्तु वां गुरु यदृच्छयागतम् ।
राघवप्लवगराजयोरिव प्रेम युक्तमितरेतराश्रयम् ॥ ५७ ॥
नाभियोक्तुमनृतं त्वमिष्यसे कस्तपस्विविशिखेषु चादरः ।
सन्ति भूभृति शरा हि नः परे ये पराक्रमवसूनि वज्रिणः ॥ ५८ ॥
मार्गणैरथ तव प्रयोजनं नाथसे किम्पतिन्न भूभृतः ।
त्वद्विधं सुहृदमेत्य सोऽर्थिनङ्किन्नयच्छति विजित्यमेदिनीम् ॥ ५९ ॥
तेन सूरिरुपकारिताधनः कर्त्तुमिच्छति न याचितं वृथा ।
सीदतामनुभवन्निवार्थिनां वेद यत्प्रणयभङ्गवेदनाम् ॥ ६० ॥
शक्तिरर्थपतिषु स्वयङ्ग्रहम्प्रेम कारयति वा निरत्ययम् ।
कारणद्वयमिदन्निरस्यतः प्रार्थनाधिकबले विपत्फला ॥ ६१ ॥
अस्त्रवेदमधिगम्य तत्त्वतः कस्य चेह भुजवीर्य्यशालिनः ।
जामदग्न्यमपहाय गीयते तापसेषु चरितार्थमायुधम् ॥ ६२ ॥
अभ्यघानि मुनिचापलात्त्वया यन्मृगः क्षितिपतेः परिग्रहः ।
अक्षमिष्ट तदयं प्रमाद्यतां संवृणोति खलु दोषमज्ञता ॥ ६३ ॥
जन्मवेषतपसां विरोधिनीं मा कृथाः पुनरमूमपक्रियाम् ।
आपदेत्युभयलोकदूषणी वर्त्तमानमपथे हि दुर्म्मतिम् ॥ ६४ ॥
यष्टुमिच्छसि पितॄन्न साम्प्रतं संवृतोऽर्च्चिचयिषुर्द्दिवौकसः ।
दातुमेव पदवीमपि क्षमः किं मृगेऽङ्ग विशिखं न्यवीविशः ॥ ६५ ॥
सज्जनोऽसि विजहीहि चापलं सर्व्वदा क इव वा सहिष्यते ।
वारिधीनिव युगान्तवायवः क्षोभयन्त्यनिभृतागुरूनपि ॥ ६६ ॥
अस्त्रवेदविदयम्महीपतिः पर्व्वतीयइति मावजीगणः ।
गोपितुम्भुवमिमां मरुत्वता शैलवासमनुनीय लम्भितः ॥ ६७ ॥
तत्तितिक्षितमिदम्मया मुने रित्यवोचत वचश्चमूपतिः ।
बाणमत्रभवते निजन्दिशन्नाप्नुहि त्वमपि सर्व्वसम्पदः ॥ ६८ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आत्मनीनमुपतिष्ठतेगुणाः सम्भवपरमन्ति चापदः।
इत्यनेकफलभाजि मा स्म भूदर्थिता कथमिवार्य्यसङ्गमे॥ ६९॥
इष्यतामयमनोकहान्तरे तिग्महेतिपृतनाभिरन्वितः।
साह्विवीचिरिव सिन्धुरुद्धतो भूपतिः समयसेतुवारितः॥ ७०॥
सज्यन्धनुर्वहति योऽहिपतिस्थवीयःस्थेयान् जयन् हरितुरङ्गमकेतुलक्ष्मीम्।
अस्यानुकूलय मतिं मतिमन्ननेन सख्या सुखं समुपयास्यसि चिन्तितानि॥७१॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्ज्जुनीये महाकाव्ये
दूतवाक्यं नाम त्रयोदशस्सर्गः॥ १३॥

---

# चतुर्दशः सर्गः।

ततः किरातस्य वचोभिरुद्धतैः पराहतः शैल इवार्णवाम्बुभिः।
जहौ न धैर्य्यं कुपितोऽपि पाण्डवः सुदुर्ग्रहान्तःकरणाहि साधवः॥ १॥
सलेशमुल्लिङ्गितशात्रवेङ्गितः कृती गिरां विस्तरतत्त्वसङ्ग्रहे।
अयम्प्रमाणीकृतकालसाधनः प्रशान्तसंरम्भ इवाददे वचः॥ २॥
विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्त्तते नाकृतपुण्यकर्म्मणाम्प्रसन्नगम्भीरपदा सरस्वती॥ ३॥
भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थङ्कतिचित्प्रकाशताम्॥ ४॥
स्तुवन्ति गुर्व्वीमभिधेयसम्पदं विशुद्धिमुक्तेरपरे विपश्चितः।
इति स्थितायाम्प्रतिपुरुषं रुचौ सुदुर्ल्लभाः सर्व्वमनोरमा गिरः॥ ५॥
समस्य सम्पादयता गुणैरिमान्त्वया समारोपितभार भारतीम्।
प्रगल्भमात्मा धुरि धुर्य्य वाग्मिनां वनेचरेणापि सताधिरोपितः॥ ६॥
प्रयुज्य सामाचरितं विलोभनम्भयं विभेदाय धियः प्रदर्शितम्।
तथाभियुक्तञ्च शिलीमुखार्थिना यथेतरन्न्याय्यमिवावभासते॥ ७॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विरोधि सिद्धेरिति कर्त्तुमुद्यतः स वारितः किम्भवता न भूपतिः ।
हिते नियोज्यः खलु भूतिमिच्छता सहार्थनाशेन नृपोऽनुजीविना ॥ ८ ॥
ध्रुवं प्रणाशः प्रहितस्य पत्रिणः शिलोच्चये तस्य विमार्गणं नयः ।
न युक्तमत्रार्य्यजनातिलङ्घनं दिशत्यपायं हि सतामतिक्रमः ॥ ६ ॥
अतीतसङ्ख्या विहितामनमाग्निना शिलीमुखाः खाण्डवमत्तुमिच्छता ।
अनादृतस्यामरसायकेष्वपि स्थिता कथं शैलजनाशुगे धृतिः ॥ १० ॥
यदि प्रमाणीकृतमार्य्यचेष्टितं किमित्यदोषेण तिरस्कृता वयम् ।
अयातपूर्वा परिवादगोचरं सतां हि वाणी गुणमेव भाषते ॥ ११ ॥
गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसञ्जनम् ।
द्विधेव कृत्वा हृदयन्निगूहतः स्फुरन्नसाधोर्विवृणोति वागसिः ॥ १२ ॥
वनाश्रयाः कस्य मृगाः परिग्रहाः शृणाति यस्तान्प्रसभेन तस्य ते ।
प्रहीयतामत्र नृपेण मानिता न मानिता चास्ति भवन्ति च श्रियः ॥ १३ ॥
न वर्त्म कस्मैचिदपि प्रदीयतामिति व्रतं मे विहितम्महर्षिणा ।
जिघांसुरस्मान्निहतोमया मृगो व्रताभिरक्षा हि सतामलङ्क्रिया ॥ १४ ॥
मृगान्विनिघ्नन् मृगयुः स्वहेतुना कृतोपकारः कथमिच्छता न्नपः ।
कृपेति चेदस्तु मृगः क्षतः क्षणादनेन पूर्वं न मयेति का गतिः ॥ १५ ॥
अनायुधे सत्त्वजिघांसिते मुनौ कृपेति वृत्तिर्महतामकृत्रिमा ।
शरासनं बिभ्रति सज्यसायकं कृतानुकम्पः स कतम्प्रतीयते ॥ १६ ॥
अथो शरस्तेन मदर्थमुज्झितः फलञ्च तस्य प्रतिकायसाधनम् ।
अविक्षते तत्र मयात्मसात्कृते कृतार्थता नन्वधिका चमूपतेः ॥ १७ ॥
यदात्थ कामम्भवता स याच्यतामिति क्षमन्नैतदनल्पचेतसाम् ।
कथं प्रसह्याहरणैषिणां प्रियाः परावनत्या मलिनीकृताः श्रियः ॥ १८ ॥
अभूतमासज्य विरुद्धमीहितम्बलादलभ्यन्तव लिप्सते नृपः ।
विजानतोऽपि ह्यनयस्य रौद्रताम्भवत्यपाये परिमोहिनी मतिः ॥ १६ ॥
असिः शरावर्म्म धनुश्च नोच्चकैर्विविच्य किम्प्रार्थितमीश्वरेण ते ।
अथास्ति शक्तिः कृतमेव याच्ञया न दूषितः शक्तिमतां स्वयंग्रहः ॥ २०
सखा स युक्तः कथितः कथयन्त्वया यदृच्छयाऽसूयति यस्तपस्यते ।
गुणार्जनोच्छ्रायविरुद्धबुद्धयः प्रकृत्यमित्रा हि सतामसाधवः ॥ २१ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

वयं क्व वर्णाश्रमरक्षणोचिताः क्व जातिहीना मृगजीवितच्छिदः ।
सहापकृष्टैर्म्महतां न सङ्गतम्भवन्ति गोमायुसखा न दन्तिनः ॥ २२ ॥
परोऽवजानाति यदज्ञताजडस्तदुन्नतानान्न विहन्ति धीरताम् ।
समानवीर्य्यान्वयपौरुषेषु यः करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ २३ ॥
यदा विगृह्णाति हतन्तदा यशः करोति मैत्रीमथ दूषिता गुणाः ।
स्थितिं समीक्ष्योभयथा परीक्षकः करोत्यवज्ञोपहतम्पृथग्जनम् ॥ २४ ॥
मया मृगान् हन्तुरनेन हेतुना विरुद्धमाक्षेपवचस्तितिक्षितम् ।
शरार्थमेष्यत्यथ लप्स्यते गतिं शिरोमणिं दृष्टिविषाज्जिघृक्षतः ॥ २५ ॥
इतीरिताकूतमनीलवाजिनञ्जयाय दूतः प्रतितर्ज्य तेजसा ।
ययौ समीपं ध्वजिनीमुपेयुषः प्रसन्नरूपस्य विरूपचक्षुषः ॥ २६ ॥
ततोऽपवादेन पताकिनीपतेश्चचाल निर्ह्रादवती महाचमूः ।
युगान्तवाताभिहतेव कुर्व्वती निनादमम्भोनिधिवीचिसंहतिः ॥ २७ ॥
रणाय जैत्रः प्रदिशन्निव त्वरान्तरङ्गितालम्बितकेतुसन्ततिः ।
पुरोबलानां सघनाम्बुशीकरः शनैः प्रतस्थे सुरभिः समीरणः ॥ २८ ॥
जयारवक्ष्वेडितनादमूर्च्छितः शरासनज्यातलवारणध्वनिः ।
असम्भवन् भूधरराजकुक्षिषु प्रकम्पयन् गामवतस्तरे दिशः ॥ २९ ॥
निशातरौद्रेषु विकाशताङ्गतैः प्रदीपयद्भिः ककुभामिवान्तरम् ।
वनेसदां हेतिषु भिन्नविग्रहैर्विपुस्फुरे रश्मिमतो मरीचिभिः ॥ ३० ॥
उदूढवक्षःस्थगितैकदिङ्मुखो विकृष्टविस्फारितचापमण्डलः ।
वितत्य पक्षद्वयमायतम्बभौ विभुर्गुणानामुपरीव मध्यगः ॥ ३१ ॥
सुगेषु दुर्गेषु च तुल्यविक्रमैर्ज्जवादहम्पूर्विकया यियासुभिः ।
गणैरविच्छेदनिरुद्धमाबभौ वनं निरुच्छ्वासमिवाकुलाकुलम् ॥ ३२ ॥
तिरोहितश्वभ्रनिकुञ्जरोधसः समश्नुवानाः सहसातिरिक्तताम् ।
किरातसैन्यैरपिधाय रेचिता भुवः क्षणान्निम्नतयेव भेजिरे ॥ ३३ ॥
पृथूरुपर्य्यस्तबृहल्लताततिर्जवानिलाघूर्णितशालचन्दना ।
गणाधिपानाम्परितः प्रसारिणी वनान्यवाञ्चीव चकार संहतिः ॥ ३४ ॥
ततः सदर्पम्प्रततन्तपस्यया मदस्रुतिक्षाममिवैकवारणम् ।
परिज्वलन्तन्निधनाय भूभृतान्दहन्तमाशा इव जातवेदसम् ॥ ३५ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अनादरोपात्तधृतैकसायकञ्जयेऽनुकूले सुहृदीव सस्पृहम् ।
शनैरपूर्णप्रतिकारपेलवे निवेशयन्तन्नयने बलोदधौ ॥ ३६ ॥
निषण्णमापत्प्रतिकारकारणे शरासने धैर्य्य इवानपायिनि ।
अलङ्घनीयं प्रकृतावपि स्थितन्निवातनिष्कम्पमिवापगापतिम् ॥ ३७ ॥
उपेयुषीं बिभ्रतमन्तकद्युतिम्बधाददूरे पतितस्य दंष्ट्रिणः ।
पुरः समावेशितसत्पशुं द्विजैः पतिम्पशूनामिव हूतमध्वरे ॥ ३८ ॥
निजेन नीतं विजितान्यगौरवङ्गभीरतान्धैर्य्यगुणेन भूयसा ।
वनोदयेनेव घनोरुवीरुधा समन्धकारीकृतमुत्तमाचलम् ॥ ३९ ॥
महर्षभस्कन्धमनूनकन्धरं बृहच्छिलावप्रघनेन वक्षसा ।
समुज्जिहीर्षुञ्जगतीम्महाभरां महावराहं महतोऽर्णवादिव ॥ ४० ॥
हरिन्मणिश्याममुदग्रविग्रहं प्रकाशमानम्परिभूय देहिनः ।
मनुष्यभावे पुरुषं पुरातनं स्थितञ्जलादर्श इवांशुमालिनम् ॥ ४१ ॥
गुरुक्रियारम्भफलैरलङ्कृतङ्गतिं प्रतापस्य जगत्प्रमाथिनः ।
गणाः समासेदुरनीलवाजिनं तपात्यये तोयघना घनाद्रिव ॥ ४२ ॥ कुलकम् ॥
यथास्वमाशंसित विक्रमाः पुरा मुनिप्रभावक्षततेजसः परे ।
ययुः क्षणादप्रतिपत्तिमूढतां महानुभावः प्रतिहन्ति पौरुषम् ॥ ४३ ॥
ततः प्रजह्रे सममेव तत्र तैरपेक्षितान्योन्यबलोपपत्तिभिः ।
महोदयानामपि सङ्घवृत्तितां सहायसाध्याः प्रदिशन्ति सिद्धयः ॥ ४४ ॥
किरातसैन्यादुरुचापनोदिताः समं समुत्पेतुरुपात्तरंहसः ।
महावनादुन्मनसः खगा इव प्रवृत्तपत्रध्वनयः शिलीमुखाः ॥ ४५ ॥
गभीररन्ध्रेषु भृशं महीभृतः प्रतिस्वनैरुन्नमितेन सानुषु ।
धनुर्निनादेन जवादुपेयुषा विभिद्यमाना इव दध्वनुर्दिशः ॥ ४६ ॥
विधूनयन्ती गहनानि भूरुहान्तिरोहितोपान्तनभोदिगन्तरा ।
महीयसी वृष्टिरिवानिलेरितारवं वितेने गणमार्गणावलिः ॥ ४७ ॥
त्रयीमृतूनामनिलाशिनस्सतः प्रयाति पोषं वपुषि प्रहृष्यतः ।
रणाय जिष्णोर्विदुषे सत्वरं घनत्वमीये शिथिलेन वर्म्मणा ॥ ४८ ॥
पतत्सु शस्त्रेषु वितत्य रोदसी समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा बलेषु दृष्टिर्विनिपातशंसिनी ॥ ४९ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

दिशः समूहन्निव विक्षिपन्निव प्रभां रवेराकुलयन्निवानिलम्।
मुनिश्चचाल क्षयकालदारुणः क्षितिं सशैलां चलयन्निवेषुभिः॥ ५०॥
विमुक्तमाशंसितशत्रुनिर्ज्जयैरनेकमेकावसरं वनेचरैः।
तन्निर्जघानायुधमन्तरा शरैः क्रियाफलङ्काल इवातिपातितः॥ ५१॥
गतैः परेषामविभावनीयतान्निवारयद्भिर्विपदं विदूरगैः।
भृशं बभूवोपचितो बृहत्फलैः शरैरुपायैरिव पाण्डुनन्दनः॥ ५२॥
दिवः पृथिव्याः ककुभान्नु मण्डलात्पतन्ति बिम्बादुत तिग्मतेजसः।
सकृद्विकृष्टादथ कार्म्मुकान्मुनेः शराः शरीरादिति तेऽभिमेनिरे॥ ५३॥
गणाधिपानामविधाय निर्गतैः परासुतां मर्म्मविदारणैरपि।
जवादतीये हिमवानधोमुखैः कृतापराधैरिव तस्य पत्रिभिः॥ ५४॥
द्विषां क्षतीर्याः प्रथमे शिलीमुखाः विभिद्य देहावरणानि चक्रिरे।
न तासु पेते विशिखैः पुनर्मुनेररुन्तुदत्वम्महतां ह्यगोचरः॥ ५५॥
समुज्झिता यावदराति निर्य्यतो सहैव चापान्मुनिबाणसंहतिः।
प्रभा हिमांशोरिव पङ्कजावलिन्निनाय सङ्कोचमुमापतेश्चमूम्॥ ५६॥
अजिह्ममोजिष्ठममोघमक्लमं क्रियासु बह्वीषु पृथङ्नियोजितम्।
प्रसेहिरे सादयितुन्न सादिताः शरौघमुत्साहमिवास्य विद्विषः॥ ५७॥
शिवध्वजिन्यः प्रतियोधमग्रतः स्फुरन्तमुग्रेषुमयूखमालिनम्।
तमेकदेशस्थमनेकदेशगा निदध्युरर्कं युगपत्प्रजा इव॥ ५८॥
मुनेः शरौघेण तदुग्ररंहसा बलं प्रकोपादिव विष्वगायता।
विधूनितं भ्रान्तिमियाय सङ्गिनीं महानिलेनेव निदाघजं रजः॥ ५९॥
तपोबलेनैष विधाय भूयसीस्तनूरदृश्याः स्विदिषून्निरस्यति।
अमुष्य मायाविहतं निहन्ति नः प्रतीपमागत्य किमु स्वमायुधम्॥ ६०॥
हृता गुणैरस्य भयेन वा मुनेस्तिरोहिताः स्वित्प्रहरन्ति देवताः।
कथं न्वमी सन्ततमस्य सायका भवन्त्यनेके जलधेरिवोर्म्मयः॥ ६१॥
जयेन कच्चिद्विरमेदयं रणाद्भवेदपि स्वस्ति चराचराय वा।
ततापं कीर्णा नृपसूनुमार्गणैरिति प्रतर्क्काकुलिता पताकिनी॥ ६२॥
अमर्षिणा कृत्यमिव क्षमाश्रयं मदोद्धतेनेव हितं प्रियं वचः।
बलीयसा तद्विधिनेव पौरुषम्बलन्निरस्तं न रराज जिष्णुना॥ ६३॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रतिदिशं प्लवगाधिपलक्ष्मणा विशिखसंहतितापितमूर्त्तिभिः ।
रविकरग्लपितैरिव वारिभिः शिवबले परिमण्डलता दधे ॥ ६४ ॥
प्रविततशरजालच्छन्नविश्वान्तराले विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।
कथमपि जयलक्ष्मीभ तभीता विहातुं विषमनयनसेना पक्षपातं विपेहे ॥ ६५ ॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्ज्जुनीये महाकाव्ये
अर्ज्जुनाभिगमनोनाम चतुर्दशस्सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः ।

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसु ।
भेजे दिश परित्यक्तमहेष्वासा च सा चमूः ॥ १ ॥
अपश्यद्भिरिवेशानं रणान्निवहृते गणैः ।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितम्मनः ॥ २ ॥
खण्डिताशंसया तेषाम्पराङ्मुखतया तया ।
आविवेश कृपा केतौ कृतोच्चैर्व्वानरन्नरम् ॥ ३ ॥
आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ॥
व्यक्तिमायाति महताम्माहात्म्यमनुकम्पया ॥ ४ ॥
स सासिः सासुसूः सासो येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥ ५ ॥
एकाक्षरपाद ॥

त्रासजिह्मं यतश्चैतान्मन्दमेवान्वियाय सः ।
नातिपीडयितुम्भग्नानिच्छन्ति हि महौजसः ॥ ६ ॥
अथाग्रे हसता साचिस्थितेन स्थिरकीर्त्तिना ।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा ॥ ७ ॥ निरौष्ठ्यम् ॥
मा विहासिष्ट समरं समरन्तव्यसंयतः ।
क्षतं क्षमामुरगणैरगणैरिव किं यशः ॥ ८ ॥ पादान्तादियमकम् ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः ।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥ ९ ॥

वनेऽवने वनसदां मार्गम्मार्गमुपेयुषाम्
बाणैर्बाणैः समासक्तं शङ्केऽशङ्केन शाम्यति ॥ १० ॥ पादादियमकम् ॥

पातितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्त्तिभिः ।
गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम् ॥ ११ ॥

* ना सु रो यं न वा ना गो ध र सं स्थो न रा क्ष सः ।
ना सु खो यं न वा भो गो ध र णि स्थो हि रा ज सः ॥ १२ ॥

॥ गोमूत्रिकाबन्धः ॥

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः ।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥ १३ ॥

*न नोननुन्नोनुन्नोनोनाना नानाननानतु ।
नुन्नोऽनुन्नोननुन्नेनोनानेनानुन्ननुन्ननुत् ॥ १४ ॥ एकाक्षरः ।

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयान्नालङ्कारश्च्युतोपलः ॥ १५ ॥

*स्यन्दनानो चतुरगाः सुरेभावा विपत्तयः ।
स्यन्दनानो चतुरगाः सुरेभावा विपत्तयः ॥ १६ ॥ समुद्गकः ॥

भवद्भिरधुनारातिपरिहापितपौरुषैः ।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥ १७ ॥

*वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे ।
यात किं विदिशोजेतुं तुंजेशोदिवि किंतया ॥ १८ ॥

प्रतिलोमानुलोमपादः ॥

अयं वः क्लैब्यमापन्नान्दृष्टपृष्ठानरातिना ।
इच्छतीशश्च्युताचारान्दारानिव निगोपितुम् ॥ १९ ॥

* ननु हो मथनाराघोघोरानाथमहोनु न ।
तयदातवदाभीमामाभीदावत दायत ॥ २० ॥

प्रतिलोमानुलोमपादः ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

* किन्त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः ।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता ॥ २१ ॥

* निशितासिरतोऽभीकोन्येजतेऽमरणारुचा ।
सारतोन विरोधी न स्वाभासोभरवानुत ॥ २२ ॥

* तनुवारभसोभास्वानधीरोविनतोरसा ।
चारुणा रमते जन्ये कोऽभीतोरसिताशिनि ॥ २३ ॥

॥ प्रतिलोमानुलोमेन श्लोकद्वयम् ॥

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि ।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥ २४ ॥

दे वा का नि नि का वा दे
वा हि का स्व स्व का हि वा
का का रे भ भ रे का का
नि स्व भ व्य व्य भ स्व नि ॥ २५ ॥ ॥ सर्व्वतोभद्रः ॥

प्रवृत्तशववित्रस्ततुरगाच्छिन्नसारथौ ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि ॥ २६ ॥

* स स त्व र ति दे नि त्यं
स द रा म र्ष ना शि नि
त्व रा धि क क सं ना दे
र म क त्व म क र्ष ति ॥ २७ ॥ अर्द्धभ्रमकः ॥

आसुरे लोकवित्रासविधायिनि महाहवे ।
युष्माभिरुन्नतिं नीतन्निरस्तमिह पौरुषम् ॥ २८ ॥ कुलकम् ॥

इति शासति सेनान्यां गच्छतस्ताननेकधा ।
निषिध्य हसता किञ्चित्तस्थे तत्रान्धकारिणा ॥ २९ ॥ निरौष्ठ्यम्

मुनीषु दहनातप्तान् लज्जया निविवृत्सतः ।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना ॥ ३० ॥

दूनास्तेऽरिबलादूनानिरेभावङ्क मेनिरे ।
भीताः शितशराभीताः शङ्करन्तत्र शङ्करम् ॥ ३१ ॥

पादाद्यन्तयमकम् ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

महेषुजलधौ शत्रोर्वर्त्तमाना दुरुत्तरे।
प्राप्य पारमिवेशानमाशश्वास पताकिनी॥ ३२॥
स बभार रणापेतामुचमुम्पश्चादवस्थिताम्।
पुरः सूर्य्यादुपावृत्तां छायामिव महातरुः॥ ३३॥
मुञ्चतीशे शरान् जिष्णौ पिनाकस्वनपूरितः।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः॥ ३४॥
तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः।
विस्मयेन तयोर्युद्धं चित्रसंस्थाद्इवाचलाः॥३५॥ द्विचतुर्थयमकम्॥
परिमोहयमाणेन शिक्षालाघवलीलया।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना॥ ३६॥
अवद्यन्पत्त्रिणः शम्भोः सायकैरवसायकैः।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया॥३७॥ आद्यन्तयमकम्॥
* चारचुंचुः चिरारेची चंचच्चीररुचा रुचः।
चचार रुचिरः चारु चारैराचारचंचुरः॥ ३८॥ द्व्यक्षरः॥
स्फुरत्पिशङ्गमौर्वीकन्धुनानः स दृढन्धनुः।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ॥ ३९॥
पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम्।
पयोमुचा इवारन्ध्राः सावित्रीमंशुसंहतिम्॥ ४०॥
शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना।
रुरोध मार्गणैर्मार्गन्तपनस्य त्रिलोचनः॥ ४१॥
तेन व्यातेनिरे भीमाभीमार्ज्जुनफलाननाः।
न नानुकम्पय विशिखाः शिखाधरजवाससः॥४२॥ शृङ्खलायमकम्॥
द्युवियद्गामिनी तारसंरावविहतश्रुतिः।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः॥ ४३॥ गूढ़चतुर्थपादः॥
विलङ्घ्य पत्रिणां पङ्क्तिं भिन्नः शिवशिलीमुखैः।
ज्यायो वीर्य्यमुपाश्रित्य न चकम्पे कपिध्वजः॥ ४४॥
* जगतीशरणे युक्तो हरिकान्तः सुधासितः।
दानवर्षी कृताशंसो नागराज इवाबभौ॥ ४५॥ अर्थत्रयवाची॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विफलीकृतयत्नस्य चतबाणस्य शम्भुना ।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥ ४६ ॥
स पिशङ्गजटावलिः किरन्नुरु तेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा हिमशैलेन समं विदिद्युते ॥ ४७ ॥
शतशोविशिखानवद्यते भृशमस्मै रणवेगशालिने ।
प्रथयन्ननिवार्य्यवीर्य्यतामजिघांसेषुमघातुकं शिवः ॥ ४८ ॥
शम्भोर्धनुर्म्मण्डलतः प्रवृत्तन्तम्मण्डलादंशुमिवांशुभर्त्तुः ।
निवारयिष्यन् विदधे सिताश्वः शिलीमुखच्छायवृतान्धरित्रीम् ॥ ४९ ॥
* घनं विदार्य्यार्ज्जुनबाणपूगं ससारबाणोऽयुगलोचनस्य ।
घनं विदार्य्यार्ज्जुनबाणपूगं ससार बाणोऽयुगलोचनस्य ॥ ५० ॥
रुजन्महेषून् बहुधाशुपातिनो मुहुः शरौघैरपवारयन् दिशः ।
चलाचलोऽनेक इव क्रियावशान्महर्षिसङ्घैर्बुबुधे धनञ्जयः ॥ ५१ ॥
* वि का श मी यु र्ज ग ती श मा र्ग णा
त्रि का श मी यु र्ज ग तो श मा र्ग णाः ।
वि का श मी यु र्ज ग ती श मा र्ग णा
वि का श मी यु र्ज ग ती श मा र्ग णाः ॥५२॥ महायमकम्
सम्पश्यतामिति शिवेन वितायमानं लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्य्यम् ।
अङ्गान्यभिन्नमपि तत्त्वविदाम्मुनीनां रोमाञ्चमञ्चिततरं बिभराम्बभूवुः ॥५३॥
इति श्रीमहोपाध्याय भारविकृतौ किरातार्ज्जुनीये महाकाव्ये
युद्धवर्णनं नाम पञ्चदशस्सर्गः ॥ १५ ॥



CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## षोडशः सर्गः ।



ततः किराताधिपतेरलघ्वीमाजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्कश्चिरं विचिन्वन्निति कारणानि ॥ १ ॥
मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नगानगोच्छ्रायमिवाक्षिपन्तः ॥ २ ॥
विचित्रया चित्रयतेव भिन्नां रुचं रवेः केतनरत्नभासा ।
महारथौघेन न सन्निरुद्धा पयोदमन्द्रध्वनिना धरित्री ॥ ३ ॥
समुल्लसत्प्रासमहोर्म्मिमालं परिस्फुरच्चामरफेनपङ्क्ति ।
विभिन्नमर्य्यादमिहातनोति नाश्वीयमाशा जलधेरिवाम्भः ॥ ४ ॥
हताहतेत्युद्धतभीमघोषैः समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे विवस्वदंशुज्वलिताः पतन्ति ॥ ५ ॥
अभ्यायतः सन्ततधूम्रधूम्रं व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नन्तनोति न व्योमनि मातरिश्वा ॥ ६ ॥
भूरेणुना रासभधूसरेण तिरोहिते वर्त्मनि लोचनानाम् ।
नास्त्यत्र तेजस्विभिरुत्सुकानामह्नि प्रदोषः सुरसुन्दरीणाम् ॥ ७ ॥
रथाङ्गसंक्रीडितमश्वहेषा बृहन्ति मत्तद्विपबृंहितानि ।
सङ्घर्षयोगादिव मूर्च्छितानि ह्रादन्निगृह्णन्ति न दुन्दुभीनाम् ॥ ८ ॥
अस्मिन् यशःपौरुषलोलुपानामरातिभिः प्रत्युरसं क्षतानाम् ।
मूर्च्छान्तरायं मुहुरुच्छिनत्ति नासारशीतं करिशीकराम्भः ॥ ९ ॥
असृङ्नदीनामुपचीयमानैर्विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघैः पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥
परिक्षते वक्षसि दन्तिदन्तैः प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहप्रियसाहसानाम्मन्दारमाला विरलीकरोति ॥ ११ ॥
निषादिसन्नाहमणिप्रभौघे परीयमाणे करिशीकरेण ।
अर्कत्विषोन्मीलितमभ्युदेति न खण्डमाखण्डलकार्म्मुकस्य ॥ १२ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

महीभृता पक्षवतेव भिन्ना विगाह्य मध्यम्परवारणेन ।
नावर्त्तमानानि निनदन्ति भीममपान्निधेराप इव ध्वजिन्यः ।। १३ ।।
महारथानाम्प्रतिदन्त्यनीकमधिस्यदस्यन्दनमुत्थितानाम् ।
आमूललूनैरतिमन्युनेव मातङ्गहस्तैर्व्रियते न पन्थाः ।। १४ ।।
धृतोत्पलापीड इव प्रियायाः शिरोरुहाणां शिथिलः कलापः ।
न बर्हभारः पतितस्य शङ्कोर्निषादिवक्षःस्थलमातनोति ।। १५ ।।
उज्झत्सु संहार इवास्तसङ्ख्यमह्नाय तेजस्विषु जीवितानि ।
लोकत्रयास्वादनलोलजिह्वं न व्याददात्याननमत्र मृत्युः ।। १६ ।।
इयञ्च दुर्वारमहारथानामाक्षिप्य कीर्त्तिम्महतां बलानाम् ।
शक्तिर्ममावस्यति हीनयुद्धे सौरीव ताराधिपधाम्नि दीप्तिः ।। १७ ।।
माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्य्यमुताहमन्यः ।
गाण्डीवमुक्ता हि तथा पुरेव पराक्रमन्ते न शराः किराते ।। १८ ।।
पुंसः पदं मध्यममुत्तमस्य द्विधेव कुर्वन् धनुषः प्रणादैः ।
नूनन्तथा नैष यथास्य वेषः प्रच्छन्नमप्यूहयते हि चेष्टा ।। १९ ।।
धनुः प्रबन्धध्वनितं रुषेव सकृद्विकृष्टा विततेव मौर्वी ।
सन्धानमुत्कर्षमिव व्युदस्य मुष्टेरसम्भेद इवापवर्गे ।। २० ।।
अंसाववष्टब्धनतौ समाधिः शिरोधराया रहितप्रयासः ।
धृता विकारांस्त्यजता मुखेन प्रसादलक्ष्मीः शशलाञ्छनस्य ।। २१ ।।
प्रहीयते कार्य्यवशागतेषु स्थानेषु विष्टब्धतया न देहः ।
स्थिरप्रयातेषु ससौष्ठवश्च लक्ष्येषु पातः सदृशः शराणाम् ।। २२ ।।
परस्य भूयान्विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा न सम्भवत्येव वनेचरेषु ।। २३ ।।
अप्राकृतस्याहवदुर्म्मदस्य निवार्य्यमस्यास्त्रबलेन वीर्य्यम् ।
अल्पीयसोप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्विवृद्धिः ।। २४ ।। कुलकम्
स सम्प्रधार्य्यैवमहार्य्यसारः सारं विनेष्यन् सगणस्य शत्रोः ।
प्रस्वापनास्त्रं द्रुतमाजहार ध्वान्तं घनानद्ध इवार्द्धरात्रः ।। २५ ।।
प्रसक्तदावानलधूमधूम्रा निरुन्धती धाम सहस्ररश्मेः ।
महाव[illegible] ।। २६ ।।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आसादिता तत्प्रथमम्प्रसह्य प्रगल्भतायाः पदवीं हरन्ती ।
सभेव भीमा विदधे गणानां निद्रा निरासम्प्रतिभागुणस्य ॥ २७ ॥
गुरुस्थिराण्युत्तमवंशजत्वाद्विज्ञातसाराण्यनुशीलनेन ।
केचित्समाश्रित्य गुणान्वितानि सुहृत्कुलानीव धनूंषि तस्थुः ॥ २८ ॥
कृतान्तदुर्वृत्त इवापरेषाम्पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।
अतर्कितम्पाणितलान्निपेतुः क्रियाफलानीव तदायुधानि ॥ २९ ॥
अंसस्थलैः केचिदभिन्नधैर्याः स्कन्धेषु संश्लेषवतान्तरूणाम् ।
मदेन मीलन्नयनाः सलीलन्नागा इव स्रस्तकरा निषेदुः ॥ ३० ॥
तिरोहितेन्दोरथ शम्भुमूर्ध्नः प्रणम्यमानन्तपसान्निवासैः ।
सुमेरुशृङ्गादिव बिम्बमार्कं पिशङ्गमुच्चैरुदियाय तेजः ॥ ३१ ॥
छायां विनिर्धूय तमोमयीन्तां तत्त्वस्य संवित्तिरिवापविद्याम् ।
ययौ विकाशं द्युतिरिन्दुमौलेरालोकमभ्यादिशती गणेभ्यः ॥ ३२ ॥
त्विषान्ततिः पाटलिताम्बुवाहा सा सर्वतः पूर्व्वसरीव सन्ध्या ।
निनाय तेषां द्रुतमुल्लसन्ती विनिद्रतां लोचनपङ्कजानि ॥ ३३ ॥
पृथग्विधान्यस्त्रविरामबुद्धाः शस्त्राणि भूयः प्रतिपेदिरे ते ।
मुक्तावितानेन बलाहकानां ज्योतींषि रम्या इव दिग्विभागाः ॥ ३४ ॥
द्यौरुन्ननामेव दिशः प्रसेदुः स्फुटं विसस्रे सवितुर्म्मयूखैः ।
क्षयङ्गतायामिव यामवत्यां पुनः समीयाय दिनन्दिनश्रीः ॥ ३५ ॥
महास्त्रदुर्गे शिथिलप्रयत्ने दिग्वारणेनेव परेण रुग्णे ।
भुजङ्गपाशान् भुजवीर्य्यशाली निबन्धनाय प्रजिघाय जिष्णुः ॥ ३६ ॥
जिह्वाशतान्युल्लसयन्त्यजस्रं लसत्तडिल्लोलविषानलानि ।
त्रासान्निरस्ता भुजगेन्द्रसेना नभश्चरैस्तत्पदवीं विवव्रे ॥ ३७ ॥
दिङ्नागहस्ताकृतिमुद्वहद्भिर्भोगैः प्रशस्तासितरत्ननीलैः ।
रराज सर्पावलिरुल्लसन्ती तरङ्गमालेव नभोऽर्णवस्य ॥ ३८ ॥
निःश्वासधूमैः स्थगितांशुजालः फणावतामुत्फणमण्डलानाम् ।
गच्छन्निवास्तं वपुरभ्युवाह विलोचनानां सुखमुष्णरश्मिः ॥ ३९ ॥
प्रतप्तचामीकरभासुरेण दिशः प्रकाशेन पिशङ्गयन्त्यः ।
निश्चक्रमुः प्राणहरेक्षणानां ज्वाला महोल्का इव लोचनेभ्यः ॥ ४० ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

आक्षिप्तसम्पातमपेतशोभमुद्वह्निधूमाकुलदिग्विभागम् ।
वृतन्नभो भोगिकुलैरवस्थाम्परोपरुद्धस्य पुरस्य भेजे ॥ ४१ ॥
तमाशु चक्षुःश्रवसां समूहम्मन्त्रेण तार्क्ष्योदयकारणेन ।
नेता नयेनेव परोपजापन्निवारयामास पतिः पशूनाम् ॥ ४२ ॥
प्रतिघ्नतीभिः कृतमीलितानि द्युलोकभाजामपि लोचनानि ।
गरुत्मतां सन्ततिभिर्विहायः क्षणप्रकाशाभिरिवावतेने ॥ ४३ ॥
ततः सुपर्णव्रजपक्षजन्मा नानागतिर्म्मण्डलयन् जवेन ।
जरत्तृणानीव वियन्निनाय वनस्पतीनाङ्गहनानि वायुः ॥ ४४ ॥
मनःशिलाभङ्गनिभेन पश्चान्निरुध्यमानन्निकरेण भासाम् ।
व्यूढैरुरोभिश्च विनुद्यमानन्नभः ससर्प्पेव पुरः खगानाम् ॥ ४५ ॥
दरीमुखैरासवरागताम्रं विकासि रुक्मच्छदधाम पीत्वा ।
जवानिलाघूर्णितसानुजालो हिमाचलः क्षीबइवाचकम्पे ॥ ४६ ॥
प्रवृत्तनक्तंदिवसन्धिदीप्तैर्नभःस्थलं गाञ्च पिशङ्गयद्भिः ।
अन्तर्हितार्कैः परितः पतद्भिश्छायाः समाचिक्षिपिरे वनानाम् ॥ ४७ ॥
स भोगिसङ्घः शमसुग्रधाम्नां सैन्येन निन्ये विनतासुतानाम् ।
महाध्वरे विध्यपचारदोषः कर्म्मान्तरेणेव महोदयेन ॥ ४८ ॥
साफल्यमस्त्रे रिपुपौरुषस्य कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥ ४९ ॥
ऊर्द्ध्वन्तिरश्चीनमधश्च कीर्णैर्ज्वालासटैर्लङ्घितमेघपङ्क्तिः ।
आयस्तसिंहाकृतिरुत्पपात प्राण्यन्तमिच्छन्निव जातवेदाः ॥ ५० ॥
भित्त्वेव भाभिः सवितुर्म्मयूखान् जज्वाल विष्वग्विसृतस्फुलिङ्गः ।
विशीर्य्यमाणाश्मनिनादधीरं ध्वनिं वितन्वन्नकृशः कृशानुः ॥ ५१ ॥
चयानिवाद्रीनिवतुङ्गशृङ्गान् क्वचित्पुराणीव हिरण्मयानि ।
महावनानीव च किंशुकानान्ततान वह्निः पवनानुवृत्त्या ॥ ५२ ॥
मुहुश्चलत्पल्लवलोहिनीभिरुच्चैः शिखाभिः शिखिनोवलीढाः ।
तलेषु मुक्ताविशदा बभूवुः सान्द्राञ्जनश्यामरुचः पयोदाः ॥ ५३ ॥
लिलिक्षतीव क्षयकालरौद्रे लोकं विलोलार्च्चिषि लोहिताश्वे ।
पिनाकिना हुतमहाम्बुवाहमस्त्रं पुनः पाशभृतः प्रणिन्ये ॥ ५४ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ततोधरित्रीधरतुल्यरोधसस्तडिल्लतालिङ्गितनीलमूर्त्तयः।
अधोमुखाकाशसरिन्निपातिनीरपः प्रसक्तं मुमुचः पयोमुचः॥ ५५॥
पराहतध्वस्तशिखे शिखावतो वपुष्यधिक्षिप्तसमिद्धतेजसि।
कृतास्पदास्तप्त इवायसि ध्वनिम्पयोनिपाताः प्रथमे वितेनिरे॥ ५६॥
महानले भिन्नसिताभ्रपातिभिः समेत्य सद्यः क्वथनेन फेनताम्।
व्रजद्भिरार्द्रेन्धनवत्परिक्षयं जलैर्व्वितेने दिवि धूमसन्ततिः॥ ५७॥
स्वकेतुभिः पाण्डुरनीलपाटलैः समागताः शक्रधनुःप्रभाभिदः।
असंस्थितामादधिरे विभावसोर्व्विचित्रचीनांशुकचारुतां त्विषः॥ ५८॥
जलौघसम्मूर्च्छनमूर्च्छितस्वनः प्रसक्तविद्युल्लसितैधितद्युतिः।
प्रशान्तिमेष्यन् धृतधूममण्डलो बभूव भूयानिव तत्र पावकः॥ ५९॥
प्रवृद्धसिन्धूर्म्मिचयस्थवीयसां चयैर्व्विभिन्नाः पयसां प्रपेदिरे।
उपात्तसन्ध्यारुचिभिः सरूपताम्पयोदविच्छेदलवैः कृशानवः॥ ६०॥
उपैत्यनन्तद्युतिरप्यसंशयं विभिन्नमूलोनुदयाय स क्षयम्।
तथाहि तोयौघविभिन्नसंहतिः स हव्यवाहः प्रययौ पराभवम्॥ ६१॥
अथ विहितविधेयैराशु मुक्ता वितानैरसितनगनितम्बश्यामभासाङ्घनानाम्।
विकसदमलधाम्नां प्रापनीलोत्पलानांश्रियमधिकविशुद्धांवह्निदाहादिवद्यौः॥६
इति विविधमुदासे सव्यसाची यदस्त्रङ्क्रमरनयज्ञः सादयिष्यन्नरातिम्।
विधिरिवविपरीतःपौरुषं न्यायवृत्तेःसपदितदुपनिन्ये रिक्ततां नीलकण्ठः॥६
वीतप्रभावतनुरप्यतनुप्रभावः प्रत्याचकाङ्क्ष जयिनीम्भुजवीर्य्यलक्ष्मीम्।
अस्त्रेषु भूतपतिनापहृतेषु जिष्णुर्वर्षिष्यता दिनकृतेव जलेषु लोकः॥६४॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्ज्जुनीये महाकाव्ये
किरातार्ज्जुनयुद्धन्नाम षोड़शस्सर्गः॥१६॥

---

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## सप्तदशः सर्गः ।



अथापदामुद्धरणक्षमेषु मित्रेष्विवास्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन् स्वपौरुषेणेव शरासनेन ॥ १ ॥
भूरिप्रभावेण रणाभियोगात्प्रीतो विजिह्मश्च तदीयवृत्त्या ।
स्पष्टोप्यविस्पष्टवपुःप्रकाशः सर्पन्महाधूम इवाद्रिवह्निः ॥ २ ॥
तेजः समाश्रित्य परैरहार्य्यं निजम्महन्मित्रमिवोरुधैर्य्यम् ।
आसादयन्नस्खलितप्रभावं भीमे भुजालम्बमिवारिदुर्गे ॥ ३ ॥
वंशोचितत्वादभिमानवत्या सम्प्राप्तया सम्प्रियतामसुभ्यः ।
समक्षमादित्सितया परेण वध्वेव कीर्त्त्या परितप्यमानः ॥ ४ ॥
पतिन्नगानामिव बद्धमूलमुन्मूलयिष्यन् तरसा विपक्षम् ।
लघुप्रयत्नन्निगृहीतवीर्य्यस्त्रिमार्गगावेग इवेश्वरेण ॥ ५ ॥
संस्कारवत्त्वाद्रमयत्सु चेतः प्रयोगशिक्षागुणभूषणेषु ।
जयं यथार्थेषु शरेषु पार्थः शब्देषु भावार्थमिवाशशंसे ॥ ६ ॥
भूयः समाधानविवृद्धतेजा नैवम्पुरा युद्धमिति व्यथावान् ।
सनिर्ववामास्रममर्षनुन्नं विषं महानाग इवेक्षणाभ्याम् ॥ ७ ॥
तस्याहवायासविलोलमौलेः संरम्भताम्रायतलोचनस्य ।
निर्वापयिष्यन्निव रोषतप्तं प्रस्नापयामास मुखन्निदाघः ॥ ८ ॥
क्रोधान्धकारान्तरितो रणाय भ्रूभेदलेखाः स बभार तिस्रः ।
घनोपरुद्धः प्रभवाय वृष्टेरूर्द्ध्वांशुराजीरिव तिग्मरश्मिः ॥ ९ ॥
स प्रध्वनय्याम्बुदनादि चापं हस्तेन दिङ्नाग इवाद्रिशृङ्गम् ।
बलानि शम्भोरिषुभिस्तताप चेतांसि चिन्ताभिरिवाशरीरः ॥ १० ॥
सद्वादितेवाभिनिविष्टबुद्धौ गुणाभ्यसूयेव विपक्षपाते ।
अगोचरे वागिव चोपरेमे शक्तिः शराणां शितिकण्ठकाये ॥ ११ ॥
उमापतिम्पाण्डुसुतप्रणुन्नाः शिलीमुखान व्यथयांबभूवुः ।
अभ्युत्थितस्याद्रिपतेर्नितम्बमर्कस्य पादाइव हैमनस्य ॥ १२ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

सम्प्रीयमाणोऽनुबभूव तीव्रम्पराक्रमन्तस्य पतिर्गणानाम्।
विषाणभेदं हिमवानसह्यं वप्रानतस्येव सुरद्विपस्य॥ १३॥
तस्य हि भारोद्धरणे समर्थं प्रदास्यता बाहुमिव प्रतापम्।
चिरं विषेहेऽभिभवस्तदानीं सकारणानामपि कारणेन॥ १४॥
प्रत्याहृतौजाः कृतसत्त्ववेगः पराक्रमं ज्यायसि यस्तनोति।
तेजांसि भानोरिव निष्पतन्ति यशांसि वीर्य्यज्वलितानि तस्य॥ १५॥
दूष्टावदानाद्व्यथतेऽरिलोकः प्रध्वंसमेति व्यथिताच्च तेजः।
तेजोविहीनं विजहाति दर्पः शान्तार्च्चिषं दीपमिव प्रकाशः॥ १६॥
ततः प्रयात्यस्तमदावलेपः स जय्यतायाः पदवीञ्जिगीषोः।
गन्धेन जेतुः प्रमुखागतस्य गन्धद्विपस्येव मतङ्गजौघः॥ १७॥
एवम्प्रतिद्वन्द्विषु तस्य कीर्त्तिं मौलीन्दुलेखाविशदां विधास्यन्।
इयेष पर्य्यायजयावसादां रणक्रियां शम्भुरनुक्रमेण॥ १८॥
मुनेर्विचित्रैरिषुभिः स भूयान्निन्ये वशम्भूतपतेर्बलौघः।
सहात्मलाभेन समुत्पतद्भिर्ज्जातिस्वभावैरिव जीवलोकः॥ १९॥ कलापकम्॥
वितन्वतस्तस्य शरान्धकारन्त्वस्तानि सैन्यानि रवन्निशेमुः।
प्रवर्षतः सन्ततवेपथूनि क्षपाघनस्येव गवां कुलानि॥ २०॥
स सायकान्साध्वसविप्लुतानां क्षिपन्परेषामतिसौष्ठवेन।
शशीव दोषावृतलोचनानां विभिद्यमानः पृथगाबभासे॥ २१॥
क्षोभेण तेनाथ गणाधिपानाम्भेदं ययावाकृतिरीश्वरस्य।
तरङ्गकम्पेन महाह्रदानाञ्छायामयस्येव दिनस्य भर्त्तुः॥ २२॥
प्रसेदिवांसन्न तमाप कोपः कुतः परस्मिन्पुरुषे विकारः।
आकारवैषम्यमिदं च भेजे दुर्लक्ष्यचिह्ना महतां हि वृत्तिः॥ २३॥
विस्फार्य्यमाणस्य ततो भुजाभ्यां भूतानि भर्त्रा धनुरन्तकस्य।
भिन्नाकृतिं ज्यान्ददृशुः स्फुरन्तीं क्रुद्धस्य जिह्वामिव तक्षकस्य॥ २४॥
सव्यापसव्यध्वनितोग्रचापम्पार्थः किराताधिपमाशशङ्के।
पर्य्यायसम्पादितकर्णतालं यन्ता गजं व्यालमिवापराद्धः॥ २५॥
निजघ्निरे तस्य हरेषुजालैः पतन्ति वृन्दानि शिलीमुखानाम्।
तेजस्विभिः सिन्धुमुखागतानि यादांसि यादोभिरिवाम्बुराशेः॥ २६॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विभेदमन्तःपदवीनिरोधम्प्रध्वंसनञ्चाविदितप्रयोगः ।
नेतास्त्रिलोकेषु करोति यद्यत्तत्तच्चकारास्य शरेषु शम्भुः ॥ २७ ॥
सोढावगीतप्रथमायुधस्य क्रोधोज्झितैर्वेगितया पतद्भिः ।
छिन्नैरपि त्रासितवाहिनीकः पेते कृतार्थैरिव तस्य बाणैः ॥ २८ ॥
अलङ्कृतानामृजुतागुणेन गुरूपदिष्टां गतिमास्थितानाम् ।
सतामिवापर्वणि मार्गणानाम्भङ्गः स जिष्णोर्धृतिमुन्ममाथ ॥ २९ ॥
बाणच्छिदस्ते विशिखाः स्मरारेरवाङ्मुखीभूतफलाः पतन्तः ।
अखण्डितम्पाण्डवसायकेभ्यः कृतस्य सद्यः प्रतिकारमापुः ॥ ३० ॥
चितीयमानानतिलाघवेन प्रमाथिनस्तान् भवमार्गणानाम् ।
शङ्काकुलायानिचखान दूरम्बाणान् ध्वजिन्याहृदयेष्वरातिः ॥ ३१ ॥
तस्यातियत्नादतिरिच्यमाने पराक्रमेऽन्योन्यविशेषणेन ।
हन्ता पुरां भूरि पृषत्कवर्षं निरास नैदाघमिवाम्बु मेघः ॥ ३२ ॥
अनाद्यमन्तः क्वचिदेव सर्व्वं प्रियैषिणानुग्रहिताः शिवेन ।
सुहृत्प्रयुक्ता इव नर्म्मवादाः शरामुनेः प्रीतिकराबभूवः ॥ ३३ ॥
अस्त्रैस्समानामतिरेकिणीं वा पश्यन् रिपूणामथ तस्य शक्तिम् ।
विषादवक्तव्यबलः प्रमाथी स्वमाललम्बे बलमिन्दुमौलिः ॥ ३४ ॥
ततस्तपोवीर्य्यसमुद्धतस्य पारं यियासोः समरार्णवस्य ।
महेषुजालान्यखिलानि जिष्णोरर्क्कः पयांसीव समाचचाम ॥ ३५ ॥
रिक्ते सविस्मयमथार्ज्जुनस्य निषङ्गवक्त्रे निपपात पाणिः ।
अन्यद्विपापीतजले सतर्षं मतङ्गजस्येव नगाश्मरन्ध्रे ॥ ३६ ॥
च्युते स तस्मिन्निषुधी शरार्थाईस्तार्थसारे सहसेव बन्धौ ।
तत्कालमोघप्रणयः प्रपेदे निर्वाच्यताकाम इवाभिमुख्यम् ॥ ३७ ॥
आघट्टयामास गतागताभ्यां सावेगमग्राङ्गुलिरस्य तूणौ ।
विधेयमार्गे मतिरुत्सुकस्य नयप्रयोगाविव गाञ्जिगीषोः ॥ ३८ ॥
बभार शून्याकृतिरर्ज्जुनस्तौ महेषुधी वीतमहेषुजालौ ।
युगान्तसंशुष्कजलौ विजिह्मः पूर्व्वापरौ लोक इवाम्बुराशी ॥ ३९ ॥
तेनातिनिमित्तेन तथा न पार्थस्तयोर्यथा रिक्ततयानुतेपे ।
स्वामापदम्प्रोज्झ्य विपत्तिमग्नं शोचन्ति सन्तोह्युपकारिपक्षम् ॥ ४० ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

प्रतिक्रियायै विधुरः स तस्मात्कृच्छ्रेण विश्लेषमियाय हस्तः।
पराङ्मुखत्वेऽपि कृतोपकारात्तूणीमुखान्मित्रकुलादिवार्य्यः॥ ४१॥
पश्चात्क्रिया तूणयुगस्य भर्त्तुर्जज्ञे तदानीमुपकारिणीव।
सम्भावनायां विफलीकृतायाम्पतुः पुरः साहसमासितव्यम्॥ ४२॥
तं शम्भुराक्षिप्तमहेषुजालं लोहैः शरैर्मर्म्मसु निस्तुतोद।
हृतोत्तरन्तत्त्वविचारमध्ये वक्तेव दोषैर्गुरुभिर्विपक्षम्॥ ४३॥
जहार चास्मादचिरेण वर्म्म ज्वलन्मणिद्योतितहैमलेखम्।
चण्डः पतङ्गान्मरुदेकनीलन्तड़िलतः खण्डमिवाम्बुदस्य॥ ४४॥
विकोषनिर्धूततनोर्म्महासेः फणावतश्च त्वचि विच्युतायाम्।
प्रतिद्विपावद्धरुषः समक्षं नागस्य चाक्षिप्तमुखच्छदस्य॥ ४५॥
विबोधितस्य ध्वनिना घनानां हरेरपेतस्य च शैलरन्ध्रात्।
निरस्तधूमस्य च रात्रिवह्नेर्विना तनुत्रेण रुचिं स लेभे॥ ४६॥ युग्मकम्॥
अचित्ततायामपि नाम युक्ता मनूर्द्धतामप्राप्य तदीयकृच्छ्रे।
निह्रीकृतौ ताविषुधी तदानीं विवव्रतुश्चेतनयेव योगम्॥ ४७॥
स्थितं विशुद्धे नभसीव सत्त्वे धाम्ना तपोवीर्य्यमयेन युक्तम्।
शस्त्राभिघातैस्तमजस्रमीशस्त्वष्टा विवस्वन्तमिवोल्लिलेख॥ ४८॥
संरम्भवेगोज्झितवेदनेषु गात्रेषु चाशैर्व्यसुपागतेषु।
मुनेर्बभूवागणितेषुराशेर्लौहैस्तिरस्कार इवात्ममन्युः॥ ४९॥
ततोनुपूर्वायतवृत्तबाहुः श्रीमान् चरल्लोहितदिग्धदेहः।
आस्कन्द्य वेगेन विमुक्तनादः क्षितिं विधुन्वन्निव पार्ष्णिघातैः॥ ५०॥
साम्यङ्गतेनाशनिना मघोनः शशाङ्कखण्डाकृतिपाण्डुरेण।
शम्भु विभित्सुर्धनुषा जघानस्तम्बं विषाणेन महानिवेभः॥ ५१॥ युग्मम्॥
रयेण सा सन्निदधे पतन्ती भवोद्भवेनात्मनि चापयष्टिः।
समुद्धता सिन्धुरनेकमार्गा परे स्थितेनौजसि जह्नुनेव॥ ५२॥
विकार्मुकः कर्म्मसु शोचनीयः परिच्युतौदार्य्य इवोपचारः।
विचिक्षिपे शूलभृता सलीलं स पत्रिभिर्दूरमदूरपातैः॥ ५३॥
उपोढकल्याणफलोभिरक्षन्वीरव्रतम्पुण्यरणाश्रमस्थः।
व्रतोपवासैरिव संयतात्मातेपे मुनिस्तैरिषुभिः शिवस्य॥ ५४॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

ततोग्रभूमिं व्यवसायसिद्धेः सीमानमन्यैरतिदुस्तरं सः ।
तेजःश्रियामाश्रयमुत्तमासिं साक्षादहङ्कारमिवाललम्बे ॥ ५५ ॥
शरानवद्यन्ननवद्यकर्म्मा चचार चित्रम्प्रविचारमार्गैः ।
हस्तेन निस्त्रिंशभृता स दीप्तः सार्कांशुना वारिधिरूर्म्मिणेव ॥ ५६ ॥
यथा निजे वर्त्मनि भाति भाभिश्छायामयश्चाप्सु सहस्ररश्मिः ।
तथा नभस्याप्सु रणस्थलीषु स्पष्टद्विमूर्त्तिर्ददृशे स भूतैः ॥ ५७ ॥
शिवप्रणुन्नेन शिलीमुखेनत्सरुप्रदेशादपवर्ज्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणेर्घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८ ॥
आच्छिन्नचापावरणेषुजालश्छिन्नोत्तमासिः स मृधेऽवधूतः ।
रिक्तःप्रकाशश्च बभूव भूमेरुत्सादितोद्यान इव प्रदेशः ॥ ५९ ॥
स खण्डनाम्प्राप्य परादमर्षवान् भुजद्वितीयोऽपि विजेतुमिच्छया ।
ससर्ज्ज वृष्टिं परिरुग्णपादपान्द्रवेतरेषां पयसामिवाश्मनां ॥ ६० ॥
नीरन्ध्रम्परिगमिते क्षयं पृषत्कैर्भूतानामधिपतिना शिलाविताने ।
उच्छ्रायस्थगितनभोदिगन्तरालं चिक्षेप क्षितिरुहजालमिन्द्रसूनुः ॥ ६१ ॥
निःशेषं शकलितवल्कलाङ्गसारैः कुर्व्वद्भिर्भुवमभितः कषायचित्राम् ।
ईशानः सकुसुमपल्लवैर्नगैस्तैरातेने बलिमिव रङ्गदेवताभ्यः ॥ ६२ ॥
उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥ ६३ ॥
अभिलषत उपाय विक्रमं कीर्त्तिलक्ष्म्योरसुगममरिसैन्यैरङ्कमभ्यागतस्य ।
जनक इव शिशुत्वे सुप्रियस्यैकसूनोरविनयमपि सेहे पाण्डवस्य स्मरारिः ॥ ६४ ॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्ज्जुनीये महाकाव्ये

सप्तदशस्सर्गः ॥ १७ ॥

---

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

## अष्टादश सर्गः ।



तत उदग्र इव द्विरदे मुनौ रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥
हरपृथासुतयोर्ध्वनिरुत्पतन्नमृदुसंवलिताङ्गुलिपाणिजः ।
स्फुटदनल्पशिलारवदारुणः प्रतिननाद दरीषु दरीभृतः ॥ २ ॥
शिवभुजाहतिभिन्नपृथुक्षतीः सुखमिवानुबभूव कपिध्वजः ।
क इव नाम बृहन्मनसां भवेदनुकृतेरपि सत्त्ववतां क्षमः ॥ ३ ॥
व्रणमुखच्युतशोणितशीकरस्थगितशैलतटाभभुजान्तरः ।
अभिनवौषसरागभृता बभौ जलधरेण समानमुमापतिः ॥ ४ ॥
उरसि शूलभृतः प्रहिता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः ॥ ५ ॥
निपतितेऽधिशिरोधरमायते सममरत्नियुगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना लुलितदृष्टि मदादिव चस्खले ॥ ६ ॥
अभिभवोदितमन्युविदीपितः समभिसृत्य भृशं जवमोजसा ।
भुजयुगेन विभज्य समाददे शशिकलाभरणस्य भुजद्वयम् ॥ ७ ॥
प्रववृतेऽथ महाहवमल्लयोरचलसञ्चलनाहरणोरणः ।
करणशृङ्खलसङ्कलनागुरुर्गुरुभुजायुधगर्वितयोस्तयोः ॥ ८ ॥
अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना ।
समधिरूढमजेन नु जिष्णुनास्विदिति वेगवशान्मुमुहे गणैः ॥ ९ ॥
प्रचलिते चलितं स्थितमास्थिते विनमिते नतमुन्नतमुन्नतौ ।
वृषकपिध्वजयोरसहिष्णुना मुहुरभावभयादिव भूभृता ॥ १० ॥
करणशृङ्खलनिःसृतयोस्तयोः कृतभुजध्वनि वल्गु विवल्गतोः ।
चरणपातनिपातितरोधसः प्रससृपुः सरितः परितः स्थलीः ॥ ११ ॥
वियति वेगपरिप्लुतमन्तरा समभिसृत्य रयेण कपिध्वजः ।
चरणयोश्चरणानमितक्षितिर्निजगृहे तिसृणाञ्जयिनं पुराम् ॥ १२ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

विस्मितः सपदि तेन कर्म्मणा कर्म्मणां चयकरः परः पुमान् ।
चेतुकाममवनौ तमक्षमं निष्पिपेष परिरभ्य वक्षसा ॥ १३ ॥
तपसा तथा न मुदमस्य ययौ भगवान्यथा विपुलसत्त्वतया ।
गुणसंहृतेः समतिरिक्तमहो निजमेव सत्त्वमुपकारि सताम् ॥ १४ ॥
अथ हिमशुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया ।
स्ववपुरतिमनोहरं हरन्दधतमुदीक्ष्य ननाम पाण्डवः ॥ १५ ॥
सहशरधि निजन्तथा कार्म्मुकं वपुरतनु तथैव संवर्म्मितम् ।
निहितमपि तथैव पश्यन्नसिं वृषभगतिरुपाययौ सविस्मयम् ॥ १६ ॥
सिषिचुरवनिमम्बुवाहाः शनैः सुरकुसुममियाय चित्रं दिवः ।
विमलरुचि भृशन्नभोदुन्दुभेर्ध्वनिरखिलमनाहतस्यानशे ॥ १७ ॥
आसेदुषाङ्गोत्रभिदोऽनुवृत्त्या गोपायकानाम्भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैर्द्यौराचिता तारकितेव रेजे ॥ १८ ॥
हंसा वृहन्तः सुरसद्मवाहाः संह्लादिकण्ठाभरणाः पतन्तः ।
चक्रुः प्रयत्नेन विकीर्य्यमाणैर्व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥ १९ ॥
मुदितमधुलिहो वितानीकृताः स्रज उपरि वितत्य सान्तानिकीः ।
जलद इव निषेदिवांसं वृषे मरुदुपसुखयांबभूवेश्वरम् ॥ २० ॥
कृतधृति परिवन्दितेनोच्चकैर्गणपतिभिरभिन्नरोमोद्गमैः ।
तपसि कृतफले फलज्यायसी स्तुतिरिति जगदे हरेः सूनुना ॥ २१ ॥
शरणं भवन्तमतिकारुणिकम्भव भक्तिगम्यमधिगम्य जनाः ।
जितमृत्यवोऽजित भवन्ति भये ससुरासुरस्य जगतः शरणम् ॥ २२ ॥
विपदेति तावदवसादकरी न च कामसम्पदभिकामयते ।
न नमन्ति चैकपुरुषम्पुरुषास्तव यावदीश न नतिः क्रियते ॥ २३ ॥
संसेवन्ते दानशीला विमुक्त्यै सम्पश्यन्तो जन्मदुःखम्पुमांसः ।
यन्निःसङ्गस्त्वम्फलस्यानतेभ्यः तत्कारुण्यं केवलं न स्वकार्य्यम् ॥ २४ ॥
प्राप्यते यदिह दूरमगत्वा यत्फलत्यमरलोकगताय ।
तीर्थमस्ति न भवार्णववाह्यं सार्व्वकामिकमृते भवतस्तत् ॥ २५ ॥
व्रजति शुचि पदं त्वयि प्रीतिमान् प्रतिहतमतिरेति घोरां गतिम् ।
इयमनघ निमित्तशक्तिः परा तव वरद न चित्तभेदः क्वचित् ॥ २६ ॥

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

दक्षिणाम्प्रणतदक्षिणमूर्त्तिन्त्वतः शिवकरीमविदित्वा ।
रागिणाऽपि विहिता तव भक्त्या संस्मृतिर्भव भवत्यभवाय ॥ २७ ॥
दृष्ट्वा दृश्यान्याचरणीयानि विधायप्रेक्षाकारी याति पदं मुक्तमपायैः ।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां यश्चोपास्ते साधु विधेयं स विधत्ते ॥ २८
युक्ताः स्वशक्त्या मुनयः प्रजानां हितोपदेशैरुपकारवन्तः ।
समुच्छिनत्सि त्वमचिन्त्यधामा कर्म्माण्युपेतस्य दुरुत्तराणि ॥ २९ ॥
सन्निबद्धमपहर्त्तुमहार्य्यम्भूरि दुर्गतिभयम्भुवनानाम् ।
अद्भुताकृतिमिमामतिमायस्त्वं बिभर्षि करुणामय मायाम् ॥ ३० ॥
न रागि चेतः परमा विलासिता बधूः शरीरेऽस्ति न चास्ति मन्मथः ।
नमस्क्रिया चोषसि धातुरित्यहो निसर्गदुर्बोधमिदन्तवेहितम् ॥ ३१ ॥
तवोत्तरीयङ्करिचर्म्म साङ्गजं ज्वलन्मणिः सारशनं महानहिः ।
स्रगास्यपङ्क्तिः शवभस्म चन्दनङ्कला हिमांशोश्च समञ्चकासति ॥ ३२ ॥
अविग्रहस्याप्यतुलेन हेतुना समेत्य भिन्नद्वयमूर्त्ति तिष्ठतः ।
तवैव नान्यस्य जगत्सु दृश्यते विरुद्धवेषाभरणस्य कान्तता ।। ३३ ।।
आत्मलाभपरिणामनिरोधैर्भूतसङ्घ इव न त्वमुपेतः ।
तेन सर्व्वभुवनातिग लोके नोपमानमसि नाप्युपमेयः ।। ३४ ।।
त्वमन्तकः स्थावरजङ्गमानान्त्वया जगत्प्राणिति देव विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि त्वं कारणं कारणकारणानाम् ।। ३५ ।।
रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा यल्लोकेष्वविकलमाप्तमाधिपत्यम् ।
पाविन्याः शरणगतार्त्तिहारिणे ते माहात्म्यन्तव भव तन्नमस्क्रियायाः॥ ३
तरसा भुवनानि यो बिभर्त्ति ध्वनति ब्रह्म यतः परम्पवित्रम् ।
परितोदुरितानि यः पुनीते शिव तस्मै पवनात्मने नमस्ते ।। ३७ ।।
भवतः स्मरतां सदासने जयिनि ब्रह्ममये निषेदुषाम् ।
दहते भववीजसन्ततिं शिखिनेऽनेकशिखाय ते नमः ।। ३८ ।।
आबाधामरणभयार्च्चिषा चिराय प्लुष्टेभ्यो भव महता भवानलेन ।
निर्वाणं समुपगमेन यच्छते ते वीजानां प्रभव नमोऽस्तु जीवनाय ॥ ३९ ।।
यः सर्व्वेषामावरीता वरीयान् सर्व्वैस्त्वं नावृतोनादिनिष्ठः ।
मार्गातीतायेन्द्रियाणां नमस्तेऽविज्ञेयाय व्योमरूपाय तस्मै ।। ४० ।।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

अणीयसे विश्वविधारिणे नमो नमोऽन्तिकस्थाय नमोदवीयसे ।
अतीत्य वाचां मनसाञ्च गोचरं स्थिताय ते तत्पतये नमोनमः ॥ ४१ ॥
असंविदानस्य ममेश संविदान्तितिर्चितुन्दुश्चरितन्त्वमर्हसि ।
विरोध्य मोहात्पुनरभ्युपेयुषाङ्गतिर्भवानेव दुरात्मनामपि ॥ ४२ ॥
आस्तिक्यशुद्धमवतः प्रियधर्म्म धर्म्मन्धर्म्मात्मजस्य विहितागसि शत्रुवर्गे ।
सम्प्राप्नुयां विजयमीश यया समृद्धा तां भूतनाथ विभुतां वितराहवेषु ॥४३॥
इति निगदितवन्तं सूनुमुच्चैर्मघोनः प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।
ज्वलदनलपरीतं रौद्रमस्त्रन्दधानं धनुरुपपदमस्मै वेदमभ्यादिदेश ॥ ४४ ॥

स पिङ्गाक्षः श्रीमान् भुवनमहनीयेन महसा
तनुम्भीमां बिभ्रत् त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः
सुतम्पाण्डोर्वीरञ्जलदमिव भास्वानभिययौ ॥ ४५ ॥

अथ शशधरमालेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै ।
अवितथफलमाशीर्व्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः ॥ ४६ ॥

असंहार्य्योत्साहञ्जयिनमुदयम्प्राप्य तरसा
धुरं गुर्व्वीं वोढुं स्थितमनवसादाय जगतः ।
स्वधाम्ना लोकानान्तमुपरि कृतस्थानममरा
स्तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः ॥ ४७ ॥

* व्रज जय रिपुकम्पादपद्मानतः सन्
गदितद्वति भवेन श्लाघितोदेवसङ्घैः ।
निजगृहमथ गत्वा सादरम्पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्द्धर्म्मसूनुन्ननाम ॥ ४८ ॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्ज्जुनीये महाकाव्ये
धनञ्जयास्त्रलाभोनामाष्टादशः सर्गः ॥ १८ ॥

शुभमस्तु श्रीरस्तु ।

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

# विज्ञापनम् ।

कलिकाताराजधान्यां श्रीयुतभुवनचन्द्रवसाकसंस्थापित संवाद ज्ञानरत्नाकराख्य यन्त्रे देवनागराचरे मुद्रितपुस्तकविवरणम् ।

वेणीसंहार नाटकम् (महाकवि भट्टनारायण प्रणीतम्) गवर्णमेण्ट संस्कृतपाठशालाध्यापक श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यकृतव्याख्यान सहितं तेनैव संस्कृतम् । पृष्ठा २६२ मूल्य २

सुश्रुतः, आयुर्वेदः, भगवताधन्वन्तरिणोपदिष्टेन सुश्रुतनामधेयेन तच्छिष्येण विरचितः । पृष्ठा ११६० मूल्य ७

कुमारसम्भवम्, सप्तमसर्गान्तम् [कालिदास कृतम्] श्रीमल्लिनाथसूरिविरचितया सञ्जीवनीसमाख्यया व्याख्यया, श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण विवृतव्याकरणसूत्राद्यंशयान्वितम्, तेनैवसंस्कृतम् पृष्ठा २६३ मूल्य २

कालिदासकृतकुमारसम्भवउत्तरखण्डम् सम्पूर्णमलमात मूल्य ॥०

भारविकृतकिरातार्जुनीयम् " " "

( यन्त्रस्थ )

सांख्यतत्त्वकौमुदी (वाचस्पतिमिश्र विरचिता) गवर्णमेण्ट संस्कृतपाठशालाध्यापक श्रीयुततारानाथतर्कवाचस्पतिभट्टाचार्य कृतटीकासहिता ।

रघुवंशम् (महाकविकालिदासकृतम्) मल्लिनाथटीकासहितम् ।

किरातार्जुनीयम् (भारवि कृतम्) " "

शिशुपालबधम् (माघ कृतम्) " "

भाषापरिच्छेद सहिता मुक्तावली (विश्वनाथपण्डितकृत)

गीतगोविन्दम् (जयदेव कृतम्) बालबोधिनीटीकासहितम् ।

दशकुमारचरितम् ( दण्डिन कृतम् ) पूर्वपीठिकासहितम् ।

हिन्दी ।

श्रीमद्भगवद्गीता, श्रीजगन्नाथशुक्ल विरचित मनभावनी भाषा टीका समेत मूल भगवद्गीता पृष्ठा २१४ जिल्द मूल्य २

प्रेमसागर दशमस्कन्धभागवत् की भाषा ४९० पृष्ठा जिल्दमूल्य२

वेतालपच्चीसी पृष्ठा १५८ जिल्द मूल्य १

CC-0 Pt. Chakradhar Joshi and Sons, Dev Prayag. Digitized by eGangotri

